**भूरिः** स्यात्प्रचुरे भर्मे **भीरुः** कातरयोषयोः ।
**भारो** भरेऽपि संख्यायां **भरुर्भर्मणि** भर्त्तरि ॥ २१९ ॥
**भीष्मस्तु** भीषणे रुद्रे गङ्गापुत्रे हि रक्षसोः (सि) ।
**भूभृन्महीधरे** शेषे धरे **भूतिस्तु** संपदि ॥ २२० ॥
उत्पादे सदने मांसपाकभेदे च भस्मनि ।
**भव्यं** भाविनि कल्याणे योग्ये सत्ये फलेऽस्थिनि ॥ २२१ ॥
**भीमो** वृकोदरे रुद्रे रौद्रे भूपे भयानके ।
तथाम्लवेतसे **भौमो** मङ्गले नरकासुरे ॥ २२२ ॥
**मुष्कोऽ**ण्डे तस्करे सङ्घे मोक्षवृक्षेऽपि मांसले ।
**मार्गो** भेऽन्वेषणे मासाध्वनोरेणमदे हरौ ॥ २२३ ॥
**मोघस्तु** निःफले दीने **मोघा** स्यात्पाटलातरौ ।
**मघा** भे कुसुमस्यापि कलिकायामुदाहृता ॥ २२४ ॥
**मेघोऽ**ब्दे मुस्तके **मोचा** कदल्यां शाल्मलिद्रुमे ।
**मानो** गर्वे ग्रहे **मानं** प्रमाणे च पलादिषु ॥ २२५ ॥
**महद्रा**ज्येऽपि धीतत्त्वे पृथौ **मुक्ता** तु मौक्तिके ।
पुंश्चल्यामपि **मुक्तिस्तु** निर्वाणे मोचने स्मृता ॥ २२६ ॥
**मूकोऽ**वाच्यसुरे दीने **मुखं** प्रारम्भपूज्ययोः ।
वदनोपाययोरग्रे मूले निःसारणेऽपि च ॥ २२७ ॥
**मृगो** नक्षत्रभेदे च मृगयागजभेदयोः ।
याच्ञायां च पशावेणे **मृगी** स्यान्नायिकान्तरे ॥ २२८ ॥
**माया** दम्भे दयाबुद्ध्योर्**मयो** वेसरदैत्ययोः ।
उष्ट्रे मायोच्युते (?) वस्त्रे **मयुरश्वमुखैणयोः** ॥ २२९ ॥
**माता** क्ष्मामाप्रसूधेनुदुर्गाभूमातृकासु च ।
**मल्लिस्तु** करके मत्स्ये जिने जातीकपालयोः ॥ २३० ॥
**मन्दो** मूर्खे चरेऽभाग्ये रोगग्रस्ते शनैश्चरे ।
अलसे दन्तिनां जातौ **मुण्डो** मुण्डितशीर्षयोः ॥ २३१ ॥

231 d) — C om. मुंडः.

**दैत्ये** विधुंतुदे **मण्डः** शाके सारे च मस्तुनि ।
एरण्डपिच्छाभूषासु **मण्डा** चामलकीद्रुमे ॥ २३२ ॥
**मौलिस्तु** शेखरे शीर्षे शिखासंयतकोशयोः ।
**मृतं** च याचिते मृत्यौ **मृदुः** कोमल(अ)तीव्रयोः ॥ २३३ ॥
**मधुर्मेघे** जले क्षीरे दैत्ये मासवसन्तयोः ।
हारहू(हू?)ररसे पुष्परसे यष्टिमधूकयोः ॥ २३४ ॥
**मणिर्लिङ्गाग्रभागे** स्यादजाकण्ठस्तने अमे ।
मणिके पद्मरागादौ निर्मलेऽपि भगध्वजे ॥ २३५ ॥
**मरुद्वायौ** सुरे **मीनो** राशौ मत्स्ये **मदो** रसे ।
मद्येभदानयोर्गर्वे वीर्ये कस्तूरिकामुदोः ॥ २३६ ॥
**मित्रं** सख्यौ च **मित्रोऽर्के** **मरुर्देशेऽपि** पर्वते ।
**मारः** स्मरे मृतौ विघ्ने **मोक्षो** निःश्रेयसि द्रुमे ॥ २३७ ॥
मरणे मोचने **माषो** धान्ये मानान्तरे शिशौ ।
त्वग्दोषे ज्ञातिभेदे च **मेषो** राश्यन्तरेऽप्यजे ॥ २३८ ॥
**माला** माल्ये ततौ **मूलं** कुञ्जान्तिकशिफासुभे ।
आदौ **मन्थो** रवौ नेत्ररोगे मथि च सक्तुषु ॥ २३९ ॥
**यवो** धान्येऽङ्कुरेऽङ्गुष्ठरेखामध्ये कलान्तरे ।
नीलोत्पलविशेषे च स्वल्पे कर्णविशेषके ॥ २४० ॥
**युगं** युग्मे रथाद्यङ्गे वृद्धिनामौषधेऽपि च ।
पञ्चशाखचतुष्के च कृतादौ दिवसान्तरे ॥ २४१ ॥
**योगो** युक्तौ च संगत्यां कर्मणा लब्धलाभयोः ।
देहदार्ढ्यप्रयोगे च विष्कम्भादौ तथात्मनि ॥ २४२ ॥
उपाये भेषजे विद्भिर्दिष्टः संनहने धने ।
विश्रब्धघातिनि ध्याने युक्तिर्न्याये च योजने ॥ २४३ ॥

---

**232** — b) CD पिच्छे for सारे. — d) CD तु for च.
**241** — c) C स्यात् for च.
**242** — d) D महा° for तथा°.

यज्ञो वैश्वानरे विष्णौ मखे चात्मनि पूरुषे ।
यष्टिर्दण्डे समाह्वाख्यभार्गीमधुयष्टिषु ॥ २४४ ॥
यूथी तु मागधीपुष्पभेदयोश्च कुरण्टके ।
यानं युग्ये गतौ योनिर्भगे कारणताम्रयोः ॥ २४५ ॥
यतिर्भिक्षौ विरामे च युतं युक्ते पृथग्भवे ।
यन्ता सूते हस्तिपके यक्षः श्रीदेऽपि गुह्यके ॥ २४६ ॥
यमोऽहिंसासु ध्वाङ्क्षे संयमे यमजेऽन्तके ।
यमनेऽथ यथाशब्दोऽव्ययं तुल्ये निदर्शने ॥ २४७ ॥
राका स्पष्टरजःकन्यापौर्णमासिभिदोर्निशि ।
कच्छ्वां नद्यन्तरे रेको हीने शङ्काविरेकयोः ॥ २४८ ॥
रङ्कस्तु कृपणे मल्ले रेखा स्यादल्पके च्छले ।
उल्लेखेऽपि तथा भोगे रङ्गः संगीतयुद्धभुवोः ॥ २४९ ॥
रागेऽपि रक्तत्रपुणि रागः क्लेशादिके नृपे ।
मत्सरे लोहितादौ च गान्धाराद्यनुरामयोः ॥ २५० ॥
रोकं बिले चरे वेगे वारिक्रयणभेदयोः ।
रोकोंऽशौ च रुचिः शोभास्पृहाभिष्वङ्गदीप्तिषु ॥ २५१ ॥
राजी तु पङ्क्तौ रेखायां रुजा त्वामयभङ्गयोः ।
रथः पदि शरीरे स्यात्स्यन्दने वेतसद्रुमे ॥ २५२ ॥
रीढावमाननागत्योः रढा देशान्तरे युतौ ।
रोही रोहीतके प्लक्षे वटवृक्षेऽपि पिप्पले ॥ २५३ ॥
राधा तु वध्यामलकी विष्णुक्रान्तासु सङ्गरे ।
गोपीविद्युद्विशाखासु राधो वैशाष(ख)मासि च ॥ २५४ ॥
रमस्तु मन्मथे कान्ते रक्ताशोके रमा श्रियां ।
रुमा सुग्रीवभार्यायां लवणे लवणाकरे ॥ २५५ ॥

---

246 — a) D °दण्डधरे भिक्षे (क्षौ) for °भिक्षौ विरामे च; C transp. भिक्षौ an विरामे च. — c) Cf. *Amara* 3. 3. 59 'यन्ता हस्तिपके सूते'.

248 — c) D नवीभेदे भवेत् for कच्छ्वां नद्यंतरे. — d) D भीति for शंका.

251 — a) CD चिरे for चरे. — c) C रोकस्त्वंशो for रोकोंशो च.

252 — b) Cf. *Haima* 'रुजा त्वामयभंगयो '

255 — d) CD रुमा स्यात् for लवणे.

रामो दाशरथे स्वारौ जामदग्न्ये हलायुधे ।
वृषान्तरे सिते श्यामे रामा सीतावरस्त्रियोः ॥ २५६ ॥
रसस्तु पारदे रागे शृङ्गारादौ घृतादिषु ।
गुणे द्रवे जले धातौ विषे वीर्ये रसा भुवि ॥ २५७ ॥
रथ्या मार्गे लताभेदे प्रतोल्यां रथसंहतौ ।
रक्तं तु रुधिरे रागिण्यरुणे कुङ्कुमे रहः ॥ २५८ ॥
एकान्ते मैथुने रिष्टं क्षेमाभावे शुभाशिषु ।
रूक्षोऽस्निग्धे कठोरे च राष्ट्रमुत्पातदेशयोः ॥ २५९ ॥
रूपं श्लोके पशौ नाटकादौ सौन्दर्यशब्दयोः ।
ग्रन्थावृत्तौ तथाकारे स्वभावे नाणके मृगे ॥ २६० ॥
राशिः समूहे मेषादौ रश्मिर्भासि च दोरके ।
रणो घोषे च सङ्ग्रामे रत्नमुत्कृष्टकाचयोः ॥ २६१ ॥
लेखस्तु दैवते लेख्ये लेखा पङ्क्तौ लिपावपि ।
लक्ष्मीः श्रीरिव शोभायां रमासंपत्प्रियङ्गुषु ॥ २६२ ॥
लघुर्मनोज्ञे निःसारे शीघ्रे चागुरुकृष्णयोः ।
लक्ष्यं तु वेध्ये संख्यायां लक्ष्मश्छद्मनि लक्ष्मणि ॥ २६३ ॥
लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ।
लोकः प्रजाविष्टपयोर्लेपो जग्धौ विलेपने ॥ २६४ ॥
लिङ्गं चिह्ने शिवस्याङ्गे सांख्योक्तविकृतावपि ।
मेहने चानुमानेऽथ लोलः काङ्क्षान्विते चले ॥ २६५ ॥
लिप्तं भुक्ते विलिप्ते च लाजा (जः) स्यादार्द्रतण्डुले ।
लाजं तूशीरके लाजा भ्रष्टध्याने स्युरक्षते ॥ २६६ ॥

---

259 — b) B क्षेमाभाव° for क्षेमाभावे; C °भावा° for °भावे.

262 — b) C लेख्या for लेखा. For लक्ष्मीः cf. *Vyākhyāsūdhā* on *Amara* 2. 8. 82 'लक्ष्मीः श्रीशोभासंपत्प्रियंगुषु'.

264 — b) C शाखिनी for शाकिनी.

266 b–d) Cf. *Medinī* लाजः स्यादार्द्रतण्डुले । नपुंसक मुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते' ।......; — b) BCD तंडुले. — c) D लाजा for लाजं. — d) B सृष्टधान्ये; D भृष्टधान्ये.

**वर्णो** विप्रादिके कीर्तौ स्तुतौ गीतक्रमे व्रते ।
शुक्लादिस्तुतिवेषेषु चित्राक्षरकुथास्वपि ॥ २६७ ॥

अङ्गरागे गुणे रूपे भेदे तालान्तरे शरे ।
स्वर्णे **वर्णं** कुङ्कुमे तु स्याद्बाणो वृक्षान्तरे शरे ॥ २६८ ॥

शरस्यावयवे दैत्ये कथाकादम्बरीकृति ।
**वाणिर्मेषे** सरस्वत्यां व्यूतौ च क्रयविक्रये ॥ २६९ ॥

**वेला** सेवाङ्गुलिच्छेदे काले सिन्धुजलोन्नतौ ।
**वित्तं** विचारिते द्रव्ये वीर्ये तेजःप्रभावयोः ॥ २७० ॥

बले बीजे **वरो** वर्णे देवादेरीप्सिते वृतौ ।
जामातरि विटे श्रेष्ठे **वरं** तु वरचन्दने ॥ २७१ ॥

**विधुर्नारायणे** चन्द्रे **वज्रं** भिदुरहीरयोः ।
बाले **वेरं** शरीरे च वृन्ताके चन्दने जले ॥ २७२ ॥

**वामी** शृगालीवडवाकरभीरासभीषु च ।
**वामः** पयोधरे कामे प्रतिकूले महेश्वरे ॥ २७३ ॥

प्रशस्ये तालभेदे च **वामा** तु वरयोषिति ।
**वारिः** सरस्वतीघट्योर्दन्तिबन्धनमन्दिरे ॥ २७४ ॥

**वृष्णिस्तु** यादवे मेषे **वाजी** बाणे खगाश्वयोः ।
**विद्धं** भेद्ये च सादृश्ये **वपुः** शस्तशरीरयोः ॥ २७५ ॥

**वाहो** युग्ये वृषे मेध्ये वृषस्कन्धे तुरङ्गमे ।
**व्यूहः** सङ्घे वितर्के च चमूविन्यासवेगयोः ॥ २७६ ॥

**वृषो** धर्मे पशौ राशौ श्रेष्ठे शब्दोत्तरस्थितः ।
मूष ( C षि ) के वासके शृङ्ग्यां पुंविशेषेऽपि शुक्रले ॥ २७७ ॥

---

**267** — d) B कथा° for कुथा°.

**269** — c) BCD मघे for मेषे. — d) D च्यूतौ for व्यूतौ.

**272** — c) D शिशौ for बाले. For 273ab cf. *Medinī* and *Viśva* 'वामीशृगालीवडवारासभीकरभीषु च'.

**276** — a) BCD मघे for मेध्ये.

**277** — b) D श्रेष्ठस्याद्युत्तरस्थितः.

**विधिर्वे**धसि कर्त्तव्ये दैवे कालप्रकारयोः ।
**वप्रो** रेणौ तटे शाले केदारे शिखरे चये ॥ २७८ ॥
**वधूः** पत्न्यां स्नुषानारीनवोढासारिवासु च ।
**वर्षं** संवत्सरे लोके धातुर्वर्षणयोरपि ॥ २७९ ॥
**बिम्बं** बिम्बीफले यन्त्रे मण्डलप्रतिबिम्बयोः ।
**वर्त्ति**र्गात्रानुलेपन्यां दशायां दीपकस्य च ॥ २८० ॥
**बको** रक्षोविशेषे स्याच्छिवमल्लीबकोटयोः ।
श्रीदे **वींषा** (वींखा) पुनः शूकशम्बागत्योश्च नर्त्तने ॥ २८१ ॥
**बीजं** रेतसि तत्त्वे स्यात्सारे चाङ्कूरकारणे ।
निदानाधानयोश्चापि **वाज**शब्दस्तु निःस्वने ॥ २८२ ॥
वेगे पक्षे मुनौ **वाजं** यज्ञान्ने सलिले घृते ।
**व्रजो** मार्गे कुले गोष्ठे **वर्णो** ताले वणिग्जने ॥ २८३ ॥
करणेऽपि च वाणिज्ये **वेणुर्वंशो** नृपान्तरे ।
**वटो** वृक्षे गुणे गोले साम्ये भक्ष्यवराटयोः ॥ २८४ ॥
**व्यालः** सर्पे खले सिंहे श्वापदे दुष्टकुञ्जरे ।
**विश्वं** कृत्स्ने जगच्छुण्ठ्योर्व्यक्तः स्यात्पण्डिते स्फुटे ॥ २८५ ॥
**वसुः** सूर्ये नृपे वह्नौ योक्त्रे यूथे सुरान्तरे ।
शुष्के द्रव्ये धने वृद्धौषधे रत्ने रुचि स्मृतः ॥ २८६ ॥
**बलो** हलायुधे काके रूपे दैत्यान्तरे **बलं** ।
स्थौल्ये स्थामनि सेनायां काले बोले बलाध्वनि ॥ २८७ ॥
ओषधे रत्नदीधित्योर्**बिलं** रन्ध्रनिकुञ्जयोः ।
**बिलः** शक्रहये **बाली** मेढ्रिभूषाविशेषयोः ॥ २८८ ॥

---

278 — c) B साले for शाले.
279 — d) BC प्रारंभवृष्टिषु.
281 — d) B शिवा for शंबा.
283 — d) C वर्णः for वणिग्.
284 — b) C reads वेणुवंशे for वेणुर्वंशे.
285 — ab) for ab cf. *Medinī* p. 202, v. 48 cd.
287 — c) C हलायुधो for °युधे; D omits 287cd–8a. 288. — cd) D om. cd.

**बालः** केशे शिशौ वज्रे पुच्छे बाले जले स्मृते ।
वज्रे कासेतृणे चाथ वेधाविधिमनीषिणोः ॥ २८९ ॥
**बलिः** पूजोपहारे स्याद्दण्डचामरदण्डयोः ।
जठरावयवे दैत्यविशेषे गन्धकौषधे ॥ २९० ॥
**वेगः** प्रवाहे किंपाके रये वेतसि वेतसे ।
**वङ्गा** देशविशेषे स्याद्वङ्गो वृन्ताकतूलयोः ॥ २९१ ॥
**वङ्गं** त्रपुणि सीसे च **वृषा**[षः] स्यादाटरूषके ।
**वृषा** शक्रे हये पुंसि **व्यङ्गो** हीनाङ्गभेकयोः ॥ २९२ ॥
**बभ्रुः** पृथौ मुनौ पिङ्गे नकुलेऽग्नौ हरौ शिवे ।
**वत्सं** वक्षसि **वत्सस्तु** तर्णकाब्देषु नीवृति ॥ २९३ ॥
**विष्टिः** कर्मकरे भद्राजूमूल्यप्रेषणेषु च ।
**व्यासः** प्रपञ्चे विस्तारे मुनौ **वित्तिस्तु** सम्भवे ॥ २९४ ॥
लाभे ज्ञाने विचारे स्याद्वृतिर्वरणवाटयोः ।
**वनं** प्रस्रवणे गेहे प्रवासे काननेऽम्भसि ॥ २९५ ॥
**वानं** शुष्कफले क्षामे प्रोते गन्धे कटे गतौ ।
**ब्रह्मा** विप्रे विधौ वेदे ज्ञाने योगे तपस्यपि ॥ २९६ ॥
**वीतिस्तु** प्रजने दीप्तौ धावनेऽश्वे शने गतौ ।
**वर्त्म** नेत्रे छदे मार्गे **वर्ष्म** देहप्रमाणयोः ॥ २९७ ॥
आकारे सुन्दरे **वेणी** केशबन्धप्रवाहयोः ।
**वस्नं** मूल्ये धने **वृन्तं** स्तनास्ये पुष्पबन्धने ॥ २९८ ॥
**वार्त्ता** तूदन्तवार्त्ताकीकृष्यादिषु च वर्त्तने ।
**वार्त्तं** तु वृत्तिविशदे कुशला रोगफल्गुषु ॥ २९९ ॥
**विदा** ज्ञाने धियां **बिन्दुः** शून्ये पृषतविज्ञयोः ।
**वेदिरङ्गुलिमुद्रायां** बुधे भूषितभूतले ॥ ३०० ॥

---

291 — c) D वंगः for वंगा; — d) D वंगा for वंगः.
292 — a) C om. वंगं.
296 — b) C गंध for गंधे; D रंगे for गंधे.
297 — c) Cf. *Amara* 3. 3. 121d; — d) Cf. *Amara* 3. 3. 123d.
300 — D om. 300.

शुकः स्याद्व्यासजे कीरे रक्षोऽमात्ये कृतौ शुकं ।
ग्रन्थिपर्णे शिरीषेऽथ श्लोकः पद्ये यशस्यपि ॥ ३०१ ॥

शाकः शक्तौ नृपे द्वीपे वृक्षे हरितके स्मृतः ।
शूकः शलकेऽनुक्रोशे शुङ्गाभिषवयोरपि ॥ ३०२ ॥

शोके शौकं तटे कीरगणे स्त्रीकरणान्तरे ।
शको देशेऽन्त्यजे भूपे शाणो माने कषेऽपि च ॥ ३०३ ॥

शङ्कुः प्रहरणे सङ्ख्यारुद्रमेण्ढ्रेषु कीलके ।
यादोभेदे शिफा मांसीजटामातृसरित्स्वपि ॥ ३०४ ॥

शफं खुरे वृक्षमूले शङ्खोऽस्थन्यसुरे निधौ ।
कम्बौ श्रीमान् धनाधीशे स्वर्णे तिलकपादपे ॥ ३०५ ॥

शुचिर्ग्रीष्मे सिते वह्नौ शृङ्गाराषाढमासयोः ।
शुद्धेऽनुपहते च स्यादुपधाशुद्धमन्त्रिणि ॥ ३०६ ॥

शठो धत्तूरके धूर्ते मध्यस्थपुरुषेऽलसे ।
शोणो हयान्तरे रक्ते श्योनाकनदवह्निषु ॥ ३०७ ॥

शिवं भद्रे सुखे तोये शिवो योगे श्रुतौ हरे ।
गुग्गुले जम्बुके कीले पुण्डरीके द्रुमोक्षयोः ॥ ३०८ ॥

शिवा हरीतकीफेरुपत्नीकात्यायनीषु च ।
आमलक्यां शृगालेऽपि शुद्धः केवलपूतयोः ॥ ३०९ ॥

शेषो नाशे बलेऽनन्ते स्वीकारेतरवस्तुनि ।
श्यामा गुन्द्रा सोमवल्लीनीलीकृष्णातृ[त्रि]वृत्स्वपि ॥ ३१० ॥

फलिनीसारिवन्ध्यास्वप्रसूतस्त्रियां निशि ।
वल्गुल्यां च शरं वारि शरो विशिखमुञ्जयोः ॥ ३११ ॥

---

301 — a) BCD शुकस्तु for शुकः स्यात्;

303 — c) BC शको देशे भूपभेदे.

304 For 304 D reads शिफा बालविकारे स्यान्मांसीमातृसरित्स्वपि.

305 — a) C वृक्षखुरे मूले; D शिश्ने खुरे॰ for खुरे वृक्षः. D शेफं for शफं.

311 — c) B तोये for वारि; — d) BC मार्गण for विशिख; D बाणसूच्ययोः for विशिखमुञ्जयोः.

**शरुर्वज्रे** शरे कोपे **शारिस्तु** द्यूतसाधने ।
शकुनौ गजपर्याणे **शद्रिर्जिष्णुतडित्वतोः** ॥ ३१२ ॥
**शम्भुर्ब्रह्म**हरार्हत्सु **शुभः** योगे **शुभं** सुखे ।
**शुभा** ह्वयासुहीक्षीरीशुद्धापथ्यासु पठ्यते ॥ ३१३ ॥
**श्लाघा** निन्दानघोपास्त्यभिलाषमहिलास्वपि ।
**शृङ्गं** विषाणसामर्थ्यसानुप्रूत्कर्षचिह्नयोः ॥ ३१४ ॥
**शृङ्गस्तु** मस्तके कूर्चे **शृङ्गी** शूरे पशौ गिरौ ।
**शृङ्गी** मीनान्तरे स्वर्णे विषायामृषभौषधे ॥ ३१५ ॥
**शार्ङ्गं** कार्मुकमात्रेऽपि लक्ष्मीनाथशरासने ।
**शाखी** महीरुहे वेदे राजभेदे नरेऽपि च ॥ ३१६ ॥
**शिखी** दीपे द्रुमे बाणे वह्नौ केतुग्रहे हये ।
चूडावति वलीवर्दे ताम्रचूडमयूरयोः ॥ ३१७ ॥
**शबिर्भूर्जे** नृपे ताले **शोषः** शोषणयक्ष्मणोः ।
**शाखा** वृक्षभुजे बाहौ वेदाङ्गे तालभिद्यपि ॥ ३१८ ॥
पक्षान्तरेऽन्तिके चाथ **शिखा** चूडाग्रमात्रयोः ।
केकिचूडाशिफाज्वालाघृणिलाङ्गलिकासु च ॥ ३१९ ॥
**शरद्वर्षात्यये** वर्षे **शस्तं** क्षेमप्रशस्तयोः ।
**शितिर्भूर्जे** सिते नीले **शितं** तीक्ष्णे कृशे श्रुतम् ॥ ३२० ॥
शास्ते चाकर्णने **शान्तो** दान्ते दीर्घे रसान्तरे ।
**शौण्डी** च विकपिप्पल्योः **शौण्डो** मत्तप्रसिद्धयोः ॥ ३२१ ॥
**शम्बस्तु** मुशलाग्रस्थलोहे वज्रेऽथ धूमले ।
**शक्तिः** शस्त्रे बले वाण्यामुत्साहादावुमाश्रियोः ॥ ३२२ ॥
**श्रुतिः** कर्णे श्रुतौ वेदे गीतादिध्वनिवार्त्तयोः ।
**श्येनः** पक्षिभिदि श्वेते **शादः** कर्दमशिष्ययोः ॥ ३२३ ॥

---

**315** — b) D मीनांतरे for शूरे पशौ· — c) D reads स्वर्णे शूरे पशौ· पुंसि·
**For 315**cd Cf. *Viśvakośa* : 'शृंगी विषायामृषभे स्वर्णमीनविशेषयोः'.

**316** — b) C॰पति for नाथ·

**319** — a) C समीपे च for अंतिके चाथ·

**323** — a) C शास्त्र॰ for श्रुतौ॰.

**शुक्रो** हुताशने मासभेदे दैत्यगुरौ सिते ।
**शुक्रं** नेत्रगदे बीजे **शुभ्रं** दीप्ते सितेऽभ्रके ॥ ३२४ ॥
**षडः** पेयान्तरे भेदे **षण्डः** स्याद्विड्वरे वने ।
**षष्ठी** गौरीनिषेकादिसंख्यातिथिविभक्तिषु ॥ ३२५ ॥
**स्तोकस्तु** चातके स्वल्पे **स्तोमः** स्यान्निकरे मखे ।
**स्थाणुः** कीले शिवे **सूनुः** सूर्ये पुत्रेऽनुजे द्रुमे ॥ ३२६ ॥
**सूना** वधालये जिह्वातले **सूनं** सुमेऽङ्कुरे ।
**सीरः** सूर्ये हले **स्कन्धो** विज्ञानादिषु पञ्चसु ॥ ३२७ ॥
प्रकाण्डे नृपतौ व्यूहे देहे सेवातमण्डले ।
**सौम्यो** धिष्ण्ये बुधे रम्ये **सन्धा** स्थितिप्रतिज्ञयोः ॥ ३२८ ॥
**संविदा**चारसङ्केतक्रियाकारेषु तोषणे ।
ज्ञाने नाम्नि प्रतिज्ञायां सङ्ग्रामालापयोरपि ॥ ३२९ ॥
**सूतः** प्रसूतसारथ्योः पारदे तक्ष्णि मागधे ।
ब्राह्मण्यां क्षत्रियाज्जाते **सुतः** पुत्रे नृपेऽपि च ॥ ३३० ॥
**सीता** सीरध्वजापत्ये सुरसिन्धुवरस्त्रियोः ।
सस्याधिदेवतालक्ष्म्योर्भुवि लाङ्गलपद्धतौ ॥ ३३१ ॥
**सितो** बद्धे कवौ शुभ्रे **सातिर्दा**नावसानयोः ।
**सृष्टिः** स्वभावनिर्मित्योः **स्फुटो** व्यक्तप्रफुल्लयोः ॥ ३३२ ॥
**सलिः** सर्पविशेषे स्यात्कीले कलियुगेऽपि च ।
मूर्खे भङ्गे गदे **सगा** वर्गे निर्माणमोहयोः ॥ ३३३ ॥
उत्साहेऽनुमतौ त्यागे स्वभावे निश्चये स्मृतः ।
**सुखा** प्रचेतसः पुर्यां **सुखं** स्वर्गेऽपि शर्मणि ॥ ३३४ ॥

---

**326** — d) C सूर्यपुत्रे for सूर्ये°.

**327** — c) C शीरः for सीरः.

**329** — a) C सत् for संविद्.

**330** — d) D अनुजे नृपे for नृपेपि च.

**331** — a) D शीर° for सीर°; C. omits the portion from धिदेवता in v. 331 to निर्मित्योः स्फुटो in v. 332.

**332** — b) Cf. *Amara*: 'सातिर्दानावसानयोः' 3. 3. 67; — d) Cf. *Haimakoṣa*: स्फुटो व्यक्तप्रफुल्लयोः.

सत्त्वं विते क्रियाकारेऽप्यात्मभावस्वभावयोः ।
पिशाचादौ गुणे प्राणे प्राणिद्रव्यबलेषु च ॥ ३३५ ॥
सालो वृक्षान्तरे दुर्गे स्थूलः पीने जडे स्मृतः ।
सिन्धुर्देशे नदे नद्यामब्धौ दन्तिमदे मदे ॥ ३३६ ॥
सह्यः शैले नृपे सह्यं सोढव्यायोग्ययोरपि ।
स्वरः शब्देऽपि षड्जादौ स्वरुः कुलिशबाणयोः ॥ ३३७ ॥
सत्रमाच्छादने यागे गृहे दाने वने धने ।
साधुस्त्वार्ये मुनौ सिद्धिर्योगे निष्पत्तिमोक्षयोः ॥ ३३८ ॥
सोमः समीरे कर्पूरे यागेऽप्सु पितृदैवते ।
ओषध्यां तद्रसे चन्द्रे कपौ किंपुरुषेश्वरे ॥ ३३९ ॥
दिव्यौषधे शिवे विष्णौ दिननाथे बिडौजसि ।
सिंहो मृगाधिपे राशौ श्रेष्ठे स्यादुत्तरस्थितः ॥ ३४० ॥
सुधा पृथ्वीस्नुहागङ्गेष्टिकामूर्वामृतेषु च ।
विकारे चाश्मनां सूदः सूपकारे घृतादिषु ॥ ३४१ ॥
सव्यं तु दक्षिणे वामे सङ्ख्यैकादिविचारयोः ।
सेव्यमुशीरे सेवार्हे स्वामी परिवृढे गुहे ॥ ३४२ ॥
स्वस्ति त्वाशिषि पुण्ये स्यादविनाशाद्विभव्ययोः ।
सती कात्यायनी साध्योः साक्षात्प्रत्यक्षतुल्ययोः ॥ ३४३ ॥
हरिर्विष्णौ यमे सिंहे तार्क्ष्ये भेके शुकेऽनिले ।
इन्द्रे चन्द्रे कपावंशौ वर्णाश्वाहीनभीरुषु ॥ ३४४ ॥

---

335 — d) D गुणेषु for बलेषु.

336 — b) D जले for जडे.

337 — b) B आरोग्ययोः.

338 — C trans. ab and cd; — b) BD transp. वने and धने.

340 — a) C °षधि; B °षध्यं.

341 — a) D स्नुही; D विष्कद्गंगा (?) for गंगेष्टिका; — d) D कुरंबिके for घृतादिषु.

342 D om. 342.

343 — D om. 343; — c) C तु पार्वती for कात्यायनी.

अरुणे वरुणे वंशे पावके पारदे द्विपे ।
स्वर्णे लोकान्तरे शुक्रे गिरिशेऽसौ गुहे शनौ ॥ ३४५ ॥

**हारो** मुक्तागणे चाजौ क्षेत्रमानविशेषयोः ।
यष्टिकादिचये चारौ **हीरो** वज्रहराहिषु ॥ ३४६ ॥

**हीरा** पिपीलिकालक्ष्म्योर्**हरो** वेसररुद्रयोः ।
वह्नौ **होरा** तु राशीनामर्द्धे लग्ने श्रुतेऽपि च ॥ ३४७ ॥

**होमिः** क्षीरे घृते वह्नौ **हार्यस्तु** कलिभूरुहि ।
हर्त्तव्येऽथ **हेला** स्याद्विलासावज्ञयोरपि ॥ ३४८ ॥

**हेलिः** सूर्ये परिष्वङ्गे **हालः** स्यात्सातवाहने ।
**हाला** मद्ये **हलः** सीरे **हली** कृषकसीरिणोः ॥ ३४९ ॥

**हंसो** राज्ञि रवौ धर्मे विष्णौ जीवे शिवे सिते ।
तपस्विन्यश्वखगयोः प्राधान्ये चोत्तरस्थितः ॥ ३५० ॥

**हस्तो** माने भुजे केशात्कलापे धिष्ण्यशुण्डयोः ।
**हविर्**घृते च होतव्ये **हिंसा** चौर्यादिनाशयोः ॥ ३५१ ॥

**हेतिर्**ज्वालास्त्रयोरुस्रे **हरिद्**दिशि हयान्तरे ।
तृणभेदे भवेद्वर्णे **हितं** पथ्ये धृते गते ॥ ३५२ ॥

**हनुः** कपोलावयवे हरिद्रायुधभेदयोः ।
मरणामययोर्**हारी** रम्ये हारान्विते शुके ॥ ३५३ ॥

**हन्त** हर्षे विषादे स्याद्वाक्यारम्भानुकम्पयोः ।
**हठो**ऽम्बुपर्ण्यां प्रसभे **हीनो** दीनेऽप्यपूरके ॥ ३५४ ॥

---

345 After 345 B adds 'युग्मं'.

346 — a) B गुणे for गणे.

347 — b) C हीरो for हरो; B रुद्रे च बेसरे for वेसररुद्रयोः; — d) B श्रुतांतरे.

348 — b) BC °पादपे for °भूरुहि.

349 — c) B हलं for हलः.

350 — b) C om. विष्णौ; D योनौ for विष्णौ; D transp. शिवे and सिते.

351 — a) A कोशात (?) for केशात्.

352 — b) D हरिः for हरित्; — c) BC वर्णभेदे for भवेद्वर्णे; — d) D transp. धृते and गते.

**क्षत्ता** शूद्रात्क्षत्रियायां जाते सारथिवेधसोः ।
नियुक्ते दासजे द्वाःस्थे **क्षीवो** मत्तनृशंसयोः ॥ ३५५ ॥
**क्षणः** कालान्तरे मध्ये परतन्त्रत्वपर्वणे ।
उत्सवेऽवसरे **क्ष्वेडा** सिंहनादशलाकयोः ॥ ३५६ ॥
**क्ष्वेडस्तु** गरले वक्रे ध्वाने कर्णामयेऽपि च ।
**क्ष्वेडं** दुरासदे पुष्पे लोहितार्कफले स्मृतम् ॥ ३५७ ॥
**क्षमा** तु क्षान्तिमेदिन्योः **क्षमः** शक्ते क्षमावति ।
युक्ते तालभिदि **क्षेमो** मङ्गले लब्धरक्षणे ॥ ३५८ ॥
मोक्षे **क्षारो** रसे काचे गुडे च लवणादिषु ।
**क्षुद्रा** व्यङ्गानटीवेश्याचाङ्गेरीसरघासु च ॥ ३५९ ॥
**क्षरं** वारि **क्षरो** मेघे **क्षुद्रशब्दस्तु** निर्धने ।
नृशंसे कृपणे स्वल्पे निःकृष्टच्छलयोरपि ॥ ३६० ॥
**क्षेत्रं** देहे भगे पत्न्यां केदारे भरतादिषु ।
**क्षीरं** दुग्धेऽमृते तोये **क्षितिर्गेहे** भुवि क्षये ॥ ३६१ ॥
श्रीमत्सोमभवः सलक्षसचिवो वाक्कण्ठभूषाङ्कभृत्
सम्प्रासूत सुतं महीपममलं सौभाग्यदेवी च यं ।
अस्मिन् सच्चरितेन तेन रचिते **नानार्थनामालये**
ग्रन्थे व्यक्षरसंज्ञकः समभवत्काण्डस्तृतीयाग्रजः ॥ ३६२ ॥

**इत्यनेकार्थतिलके द्वितीयः काण्डः ॥**

---

**355** — a) ABC शूद्रा for शूद्रात्.
**356** — b) BC पर्वणोः.
**357** — d) AC रोहितायाः for लोहितार्क.
**358** — c) B तालांतरे for तालभिदि,
**359** — c) C. *Amara* 3. 3. 177.
**362** — b) C om. सुतं. — c) C om. तेन (hapl.).

Colophon :—D om. the colophon. C adds द्व्यक्षरसंज्ञकः after °तिलके; B adds the following colophon—इति श्रीमहीपकृतौ महीपकोशस्यानेकार्थतिलक-द्व्यक्षरसंज्ञकः द्वितीयः काण्डः परिसमाप्तः ।

After काण्डः C adds परिये ग्रंथे द्व्यक्षरसंज्ञकः समाप्तः ॥ छ ॥

*

## ॥ तृतीयः काण्डः ॥

## ॥ अथ तृतीयं काण्डम् ॥

अकाराद्यादिभिः शब्दैरस्मिन्वर्णत्रयाभिधः ।
तृतीयः क्रियते काण्डः क्रमात्पण्डितमण्डनम् ॥ १ ॥
**अभितो**ऽभिमुखे शीघ्रे पार्श्वे कार्त्स्न्येऽपि चाव्ययं ।
**अनूक**मन्वये शीलेऽप्य**नूको** गतजन्मनि ॥ २ ॥
**अशोको** वञ्जुले वीतशोके कङ्केल्लिसूतयोः ।
**अशोका** कटुरोहिण्या **मलीकं** वितथेऽप्रिये ॥ ३ ॥
ललाटे करणे**ऽयोगः** कर्कशोद्यमकूटयोः ।
वियोगे विधुरेऽपि स्याद**मोघः** सफले स्मृतः ॥ ४ ॥
**अमोघा** तु हरीतक्यां विडङ्गेऽप्य**वटः** बिले ।
कूपे खिले महारण्ये दृष्टः कुहकजीविनि ॥ ५ ॥
**अनन्तं** विपुले वारि व्योम्न्य**नन्तो** हरौ बले ।
शेषे**ऽनन्ता** महीहैमवतीदूर्वामृतासु च ॥ ६ ॥
**अर्बुदः** पर्वते मांसे संख्यायां मांसकीलके ।
**अक्षरं** गगने वर्णे तपस्यध्वरधर्मयोः ॥ ७ ॥
निर्वाणेऽपि परब्रह्ममूलकारणयोरपि ।
**अभयं** वीरणीमूले निर्भयेऽपि मनोहरे ॥ ८ ॥
**अभया** तु हरीतक्याम**जिरं** प्राङ्गणेऽनिले ।
दर्दुरे विषये कायेप्य**त्ययः** कृच्छ्रनाशयोः ॥ ९ ॥
दोषे दण्डेऽतिक्रमे स्याद**भीषुः** प्रग्रहत्विषोः ।
**अङ्कुरं** रुधिरे रोम्णि नवोत्थाने तरौ जले ॥ १० ॥

---

2 — a) D अभितस्त्वरिते पार्श्वे; — b) D (उ)भये for पार्श्वे; — for 2c cf. *Ajayapāla*: 'अनूकमन्वये शीले'; for 2d cf. *Medinī* 'अनूको गतजन्मनि'.

3 — D विद्धिः प्रमोदे पारदे स्मृतं for वीतशोके°.

7 — b) CD रुजि° for मांस°,

10 — c) Cf. *Medinī* 'अंकुरो रुधिरे लोम्नि'.

**अरिष्टः** फेनिले निम्बे लशुने काकशङ्कयोः ।
दैत्येऽरिष्टं शुभेऽक्षेमे सूतिकागारतक्रयोः ॥ ११ ॥
**अङ्गजं** रुधिरे केशेऽङ्गजो मन्मथपुत्रयोः ।
**अञ्जनं** कज्जले याने सौवीरेऽपि रसाञ्जने ॥ १२ ॥
**अञ्जनो** दिग्गजे शैलेऽञ्जना मारुतिमातरि ।
**अमरस्त्व**स्थिसंहारे स्नुहीवृक्षे सुरे कवौ ॥ १३ ॥
**अमृतं** गगने ह्वद्ये स्वर्णे तोये रसायने ।
कैवल्ये गोरसे यज्ञे शेषे माक्षीकवर्णयोः ॥ १४ ॥
सुधायाचितयोरन्नेऽमृतो धन्वन्तरौ सुरे ।
**अमृता** मागधी पथ्यागुडूच्यामलकीषु च ॥ १५ ॥
**अनयः** व्यसने नाशेऽशुभे दैवेऽपि पामरे ।
अथावधिर्बिले सीमावधानसमयेषु च ॥ १६ ॥
**अरुणो** भास्करे रक्ते निःशब्दे कपिले बुधे ।
सन्ध्यारागे रवेःसूतेऽव्यक्तरागेऽपि चारुणा ॥ १७ ॥
नृ [त्रि] वृत्यतिविषाश्यामामञ्जिष्ठास्वपि दृश्यते ।
**अम्बरं** गगने वस्त्रे सुरभिद्रव्यतूलयोः ॥ १८ ॥
**अर्जुनो** धवले चक्षूरोगे हैहयकेकिनोः ।
तृणे द्रुमे चैकपुत्रे मातुर्मध्यमपाण्डवे ॥ १९ ॥
**आप्लुतः** स्नातके स्नातेऽप्याकल्पः कल्पवेषयोः ।
**आतङ्को** रुजि सन्तापे मुरजध्वनिशङ्कयोः ॥ २० ॥

---

11 — a) A reads अनिष्टः; for ab cf. *Medinī* "अरिष्टो लशुने निंबे फेनिले काककङ्कयोः" ।

13 — a) C अंजना for °नः.

15 — For 15cd cf. *Medinī* which agrees entirely with ***Mahīpa***.

16 — c) ABC बले for बिले.

17 — d) A अरुणं; C अरुणः.

19 — a) D नेत्र° for चक्षू°.

20 — a) ABC स्नाने for स्नाते.

**आशुगः** पवने बाणे रवौ चारोह उच्यये ।
दैर्घ्ये माने गजारोहे स्त्रीकट्यां च समुच्चये ॥ २१ ॥
**आयतिः** संहतौ भावे स्वाधीनोत्तरकालयोः ।
**आत्मभूर्मदने** शम्भौ वासुदेवमहेशयोः ॥ २२ ॥
**आसत्तिः** संगमे लाभेऽप्याका[क?]रो निकरे मणौ ।
खन्यामानद्धमाख्यातं मुरजादिकनद्धयोः ॥ २३ ॥
**आशयः** स्यादभिप्रायेऽप्याश्रये पनसद्रुमे ।
**आदित्यः** त्रिदशे भानावाम्नायः कुलआगमे ॥ २४ ॥
**आनर्त्तो** नृत्यसदने समरे जनदेशयोः ।
**आयस्तः** कष्टिते क्षिप्ते तेजिते कुपिते हते ॥ २५ ॥
**आक्रन्दः** क्रन्दनारावे भूपे दारुणसंयुगे ।
**आकर्षः** पाशके द्यूतभिदाकर्षणयोरपि ॥ २६ ॥
**आषाढो** व्रतिनां दण्डे मासे मलयपर्वते ।
**आनकः** पटहे भेर्यां मृदङ्गे मेघनिःस्वने ॥ २७ ॥
**इक्ष्वाकुः** कटुतुम्बिन्यां भूपभेदेऽप्यथेतरः ।
अन्यस्मिन्पामरेऽपि स्यादिष्वासं चापधन्विनोः ॥ २८ ॥
**इष्वासः** विशिखक्षेपे **इन्द्रियं** रेतसि स्मृतं ।
हृषीके **वेरिणं** शून्योषरयोश्च निराश्रये ॥ २९ ॥
**उन्माथः** स्याद्वधे कूटयन्त्रे दुष्टस्य घातके ।
**उर्वरा** पृथिवी सर्वसस्याढ्यधरयोरपि ॥ ३० ॥
**उत्थानमुद्गमे** सैन्ये पौरुषोद्यमयोर्युधि ।
**उदारः** दक्षिणे दातर्युदरं हृदि संयुगे ॥ ३१ ॥

---

21 — b) D उच्चयोः for उच्चये; — d) B समुच्छ्रिते; C समुच्छ्र्यो(:); D समुच्छ्र्ये.

23 For 23a cf. *Haimakośa* 3. 240c: 'आसत्तिः संगमे लाभे'.

24 — b) D आश्रयः; — d) B reads आम्नाय आगमे कुले.

25 — cd) Cf. *Medinī*: आयस्तस्तेजिते क्षिप्ते क्लेशिते कुपिते हते. 27ab = *Medinī* p. 58 st. 6cd; — b) A °भूरुहे; BC °भूधरे.

28 — b) c अथांतरः.

30 — b) ABC दृष्टः (?); — d) D सस्याढ्या°.

31 — d) AB उदारं (wrongly) for उदर.

उच्छ्रितं तून्नते ख्यातं जातमात्रप्रवृद्धयोः ।
उदानो जठरावर्ते सर्पवायुविशेषयोः ॥ ३२ ॥
उद्यानं सरणेऽरण्यविशेषेऽपि प्रयोजने ।
सुरवर्त्मन्यथोत्तंसः कर्णपूरेऽपि शेखरे ॥ ३३ ॥
उत्थितं तु समुत्पन्ने सञ्जाते वृद्धिमत्यपि ।
उचितं विदितेऽभ्यस्ते मिते युक्तेऽप्युदाहृतम् ॥ ३४ ॥
उदूढः पृथुलेऽप्यूढेऽप्युपलः प्रस्तरे मणौ ।
उत्कटश्चोद्धटे क्षीवेऽप्युदर्चिः पावकद्रुवोः ॥ ३५ ॥
अतियन्यनुजे वीरेऽप्युरगः पन्नगेऽर्भके ।
उल्लाघः निर्गदे वृक्षे निपुणे शुचिहृष्टयोः ॥ ३६ ॥
उन्मत्तः कितवोन्मादमुचुकुन्देषु पल्लवे ।
उत्पलं तूपलोऽद्रौ मासशून्याब्जभेदयोः ॥ ३७ ॥
उष्णीषं शेखरे शीर्षवेष्टने लक्षणान्तरे ।
उच्छ्वासः प्राणने गद्यबन्धभिच्छ्वासयोरपि ॥ ३८ ॥
ऊर्णायुः कम्बले मेषे श्वेतवर्णोर्णनाभयोः ।
ऋषभो वृषभे नाम्नः परःश्रेष्ठे जिनेश्वरे ॥ ३९ ॥
कर्णरन्ध्रे स्वरे कोलपुच्छे भेषजभिद्यपि ।
ऋषभी दृश्यते शूकश(शि)म्बीपुरुषाकृतियोषयोः ॥ ४० ॥
ऊशीरं चमरे दण्डशयनासनभेदयोः ।
कौतुकं मङ्गले कामे गीतादौ च कुतूहले ॥ ४१ ॥
प्रमोदे विषयाभोगे विवाहपटलेऽपि च ।
कुण्डली वरुणे व्याले मयूरे कुण्डलान्विते ॥ ४२ ॥
केसरी तुरगे सिंहे पुन्नागे नागकेसरे ।
करणं साधने काये कायस्थेन्द्रियकर्मसु ॥ ४३ ॥

---

32 — a) D उत्थितं for उच्छ्रितं.

34 For 34 cd cf. *Haima* 3. 242 cd : उचितं विदितेऽभ्यस्ते मिते युक्तेप्यथोचितम् ।.

35 — b) A उपले for उपलः.

37 — a) ABC कितवाक्षीव° for कितवोन्माद°; — b) CD मुचकुन्देषु.

40 — c) B स्यात् for दृश्यते; — d) D °शिम्बिन्याकृति°.

41 — d) D विख्याते for गीतादौ.

42 — b) BC पटले क्षणे.

योगीनामासनादौ च गीतनाट्यविशेषयोः ।
बालवादौ च करणः स्यातः शूद्राविशोः सुते ॥ ४४ ॥
कुटजस्तरुभेदे स्यादगस्त्यद्रोणयोरपि ।
करटः करिणां गण्डे दुर्मुखे काकवाद्ययोः ॥ ४५ ॥
मृतश्राद्धे कुसुम्भेऽथ कीलालं रुधिरे जले ।
क्षीरे पुष्परसे मण्डे घृतमद्यामृतेषु च ॥ ४६ ॥
कम्बलं कमले नीरे कम्बलो नागसास्नयोः ।
वैकक्ष्ये चेन्द्रिये कीटे कुन्तलो विषयान्तरे ॥ ४७ ॥
धम्मिल्लहल्योस्तक्ष्णि कुन्तहस्तास्त्रभेदयोः ।
कषायः सुरभौ रागे रसे वर्णद्रवाङ्गयोः ॥ ४८ ॥
कषायं बदरे स्निग्धे काकिणी तु वराटके ।
गुञ्जायां पणतुर्यांशे कल्याणं हेम्नि मङ्गले ॥ ४९ ॥
नगरे कसिपुर्वस्त्रे प्राकारे वलभने यतौ ।
करीरः कलशे वृक्षविशेषे वैणवाङ्कुरे ॥ ५० ॥
कलमो लेखनीशालिभिदोरङ्कूरचोरयोः ।
कपिलः कुकुरे पिङ्गे पावके वासवे मुनौ ॥ ५१ ॥
कपिला रेणुकायां च गोभेदे शिंशिपाद्रुमे ।
वह्न्यां च करिणीभेदे कामलो रोगकामिनोः ॥ ५२ ॥
वसन्ते मरुदेशे स्यात्कुम्भिलो मीनचोरयोः ।
श्लोकच्छायाहरे श्याले कुलालः कुकुभे द्रुमे ॥ ५३ ॥
कुम्भकारे तथा घूके किट्टालो लोहकुम्भयोः ।
कन्दलं कलहे शब्दे न्यङ्कुभेदोपरागयोः ॥ ५४ ॥

---

46 — c) D मांसे for मण्डे.

49 — a) D रक्ते for स्निग्धे; — b) BD काकणी; — c) D पणाक्षौ (c क्षु) दण्ड° for गुंजायां पण°; — d) For d Cf. *Haima* 3. 186 d.

50 — d) c वेणवांतरे.

52 — c) B लतायां for वह्न्यां च.

53 — a) B च for स्यात्; — c) D दुर्गे (?) for श्याले.

54 — c) D वृद्धं for शब्दे.

**कलापे**ऽपि नवाङ्कूरे **कलङ्को**ऽङ्कापवादयोः ।
अयोमले **कुसुम्भं** तु लट्वाहेम्नोः कमण्डलौ ॥ ५५ ॥

**कलत्रं** भूभुजां दुर्गस्थाने नीव्यङ्कभार्ययोः ।
**कोहल**स्तु मुनौ मद्ये **कोमलं** मृदुतोययोः ॥ ५६ ॥

**कमलं** भेषजे पङ्के शीर्षे पद्मेऽम्बुताम्रयोः ।
**कमलो** हरिणे रोगे सुधांशौ **कमला** श्रियाम् ॥ ५७ ॥

**कलाप**स्तूणके बर्हे मेखलायां च सञ्चये ।
**कुशलं** सुकृते क्षेमे पर्याप्तौ **कुशलो**ऽखले ॥ ५८ ॥

**कर्कशो** निर्दये तिग्मे कम्पिल्ये कासमर्दके ।
दृढे साहसिके खड्गे परुषे चेक्षुमत्तयोः ॥ ५९ ॥

**कौशिको** गुग्गुले शक्रे घूके सर्पधरे मुनौ ।
कोशज्ञे नकुले ताले **कौशिकी** सरिदन्तरे ॥ ६० ॥

**कपोतः** पक्षिणां भेदे पारापतविहङ्गमे ।
**कापोतं** तु कपोतानां संहतौ मज्जनेऽञ्जने ॥ ६१ ॥

**कुमारो** बालके स्कन्दे युवराजेऽश्ववारके ।
वरणानोकहे कीरे **कुमारी** तटिनीभिदि ॥ ६२ ॥

जम्बूद्वीपांशपार्वत्योः **केटिरु**र्नकुले स्मृतः ।
शक्रगोपे सुनासीरे कुटा(ट्टा)रं केवले रते ॥ ६३ ॥

**कनकं** चम्पके स्वर्णे धत्तूरे नागकेसरे ।
कालीये किंशुके दृष्टं काञ्चनारेऽथ **कण्टकः** ॥ ६४ ॥

---

**55** — d) D कंदलीशाखवृक्षयोः.
**56** — c) मनौ for मुनौ.
**57** — d) B मृगांके ( D चंद्रेपि ) for सुधांशौ.
**58** — b) D om संच ( hapl. ).
**60** — a) AD कौशिके; B गुग्गुलौ.
**61** — a) B पक्षुणां; — cd) For 61cd CD read: 'क ( D का ) पोतम ( D मं ) ज ( ज्ज ) ने वाप्यां कपोतानां च संहतौ ।'
**62** — a) c स बालके for बालके.
**63** — a) D °द्वीपेपि पार्वत्यां for °द्वीपांशपार्वत्योः; — b) AD केटिरः; — c) B शुना ( C सुना ) शीरे.

नरके (नखे ?) शाखिनामङ्गे रोमाञ्चे वेणुवैरिणोः ।
**कुमुदं** कैरवे दैत्यनागयोर्दिग्गजे कपौ ॥ ६५ ॥
**कु(क)कुभो** भूरुहे वीणाप्रसेवे रोगभिद्यपि ।
**कानीनः** कन्यकाजाते व्यासे चम्पापतावपि ॥ ६६ ॥
**कृतान्तो**ऽन्तकसिद्धान्तदैवाकुशलकर्मसु ।
**करको** मेघपाषाणे पात्रभेदे कमण्डलौ ॥ ६७ ॥
दाडिमेऽपि खगे बाहौ **कारकं** कर्तृकर्मणोः ।
**कटुकं** कटुरोहिण्यां तिक्ते व्योषेऽथ **कञ्चुकः** ॥ ६८ ॥
चोले वर्द्धापके वारवाणे निर्मोकवृक्षयोः ।
**कदम्बः** शिखरे वृक्षविशेषे निकुरम्बके ॥ ६९ ॥
सर्षपे **कीकसं** शल्ये कारावस्थनि **कीकसः** ।
वानरे भिक्षुके कीरे **कश्मलः** पापपङ्कयोः ॥ ७० ॥
**कटकं** कङ्कणे राजधानीभद्विजभूषयोः ।
नितम्बे भूभृतः सैन्ययोगे बाहुविभूषणे ॥ ७१ ॥
**कोट्टारो** नगरे कूपे **कर्णिका** मध्यमाङ्गुलौ ।
दन्तिशुण्डामुखे बीजकोशे पङ्केरुहस्य च ॥ ७२ ॥
कुट्टिन्यां कर्णभूषायां **कीटको** निष्ठुरे कृमौ ।
**कीचको** रन्ध्रमद्वेणौ वृक्षदैत्यविशेषयोः ॥ ७३ ॥
**कुलिकस्तु** कुलश्रेष्ठे नागे योगान्तरे तरौ ।
**कूर्चिका** कुञ्चिकायां च क्षीरस्य विकृतावपि ॥ ७४ ॥
आलेख्यलेखनीसूचीकोरकेष्वथ **कोरकं** ।
कक्कोलद्रौ मृणाले स्यात्कुड्मले **कुशिको** मुनौ ॥ ७५ ॥

---

65 — b) AD दोषवैरिणोः for वेणु°, C वेष°.

67 — a) D °सिद्धांते for °सिद्धांत°; — b) D दैवी° for दैवा°. For ab Cf. *Medinī* p. 82. 105cd. 69. — a) D वर्द्धापने; — d) B निकुरुंबके.

71 — a) CD लवणे for कंकणे; — b) D °भूषणे for °भूषयोः; — c) B च गिरेः, CD (wrongly) शिखरे for भूभृतः; C om. भूभृतः.

72 — a) AB नागरे for नगरे; — d) D °कोश for °कोशे.

73 — a) AB कुट्ट° (D currupt कुटि°) for कुट्टि°.

74 — c) B कून्चिका.

75 — a) CD लेखिनी.

सर्जे बिभीतके फाल्गे कालिङ्गः गजसर्पयोः ।
क्रकचः करपत्रे स्यात्कर्कशो ग्रन्थिलद्रुमे ॥ ७६ ॥
अथो (?) कणीचिः शकटे गुञ्जावल्लीविशेषयोः ।
कम्बोजः करिणां भेदे शंखदेशविशेषयोः ॥ ७७ ॥
करजस्तु नखे वृक्षे कुपीटं जठरे जले ।
करेणुर्गजहस्तिन्योः कर्णिकारद्रुमेऽपि च ॥ ७८ ॥
कौङ्कणो विषये वृक्षे कौङ्कणं त्वायुधान्तरे ।
कायस्थो मारुते वर्णजीवके परमात्मनि ॥ ७९ ॥
कायस्था तु हरीतक्यां तथा चामलकीद्रुमे ।
कपर्दः पार्वतीनाथजटाजूटे वराटके ॥ ८० ॥
कीनाशस्तु कदर्येस्याद्राक्षसे कर्षु(र्ष)के यमे ।
कुसुमं तु फले पुष्पे स्त्रीरजे नेत्ररोगयोः ॥ ८१ ॥
कङ्कणं मण्डने हस्तसूत्रे च भुजभूषणे ।
कमठः कच्छपे भाण्डविशेषे दानवान्तरे ॥ ८२ ॥
कदली हरिणे दन्तिपताकामोचयोरपि ।
कान्ताराख्या वने विघ्ने दुर्गमार्गेक्षुभेदयोः ॥ ८३ ॥
कुतपः समये रूप्ये दौहित्रे सलिलेऽप्यजे ।
कम्बलेऽपि तिले दर्भे स्रजे पात्रे हुताशने ॥ ८४ ॥
भागिनेये घृते सूर्ये द्विजन्मन्यतिथौ गवि ।
कुदपः निःकुटे माने मनावप्यथ कश्यपः ॥ ८५ ॥
मुनौ मीनविशेषे स्यात्काश्यपी तटिनीभुवोः ।
कुकुदं तु प्रधानेंसे वृषाङ्गे राजलक्ष्मणि ॥ ८६ ॥
कबरी केशविन्यासे कबरं लवणाम्लयोः ।
कुलायः पक्षिणां स्थाने सदनेऽपि कुलोद्भवे ॥ ८७ ॥

---

79 — a) c कोकणो; D कौंकणो; — b) B कौंकणं; — d) B °सेवके (in *marg. sec. m.*), D °विशेषे for °जीवके.
81 — b) D कर्बुके for कर्षके.
82 — b) D °भूषिते for °भूषणे.
83 — a) C कदला (in marg.) हरणी for कदली हरिणे; — c) C कान्ताराख्य; C विघ्न (D शङ्के) for विघ्ने.
85 — d) C मुखानावथ (corrupt).

खिङ्गिरस्तु शिफाभेदे खट्वाङ्गे वारिवालके ।
खर्जूरं तु फले रूप्ये खर्जूरो गृहगोधिके ॥ ८८ ॥
क्षुद्रजातौ तरोर्भेदे खनकः सन्धितस्करे ।
मूषके वित्ततत्त्वज्ञे खञ्जिकः यन्त्रनिःस्वने ॥ ८९ ॥
महिषीक्षीरफेने च चण्डाले लोहभिद्यपि ।
खपुरः मुस्तके वृक्षे लसके कुम्भपूगयोः ॥ ९० ॥
गन्धर्वः गायने चाश्वे खेचरे हरिणान्तरे ।
ग्रहणं स्वीकृतौ शब्दे गुणे यत्नोपरागयोः ॥ ९१ ॥
ग्रन्थिको ग्रहचारज्ञे माद्रेये गुग्गुले द्रुमे ।
ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णविडङ्गयोः ॥ ९२ ॥
गोलको मणिके गोले जारजः विधवासुते ।
गणिका यूथिकावृक्षे तर्कारीपण्ययोषयोः ॥ ९३ ॥
गण्डकी तटिनीभेदे गण्डकः खड्गिविघ्नयोः ।
विद्यावच्छेदसंख्यासु गोरङ्कुबन्दिनम्रयोः ॥ ९४ ॥
खगेऽथ गोपतिः शक्रे षण्ढे बलवरुद्रयोः ।
वरुणे सरितां नाथे दिननाथे महीपतौ ॥ ९५ ॥
गोदन्तो दंशिते मद्धे हरितालेऽथ गोस्तनी ।
हारहूरालतावृत्तियोजनास्वथ गोस्तनः ॥ ९६ ॥
हारेऽपि ग्रन्थिलो ग्रन्थिवृते वेणौ विकङ्कते ।
करीरे गौरिलो गर्वे सिद्धार्थे लोहचूर्णके ॥ ९७ ॥
गोपुरं नगरद्वारे मुस्तकद्वारयोरपि ।
गोपालो बलवे भूपे गोकिलो मुशले हले ॥ ९८ ॥

---

88 — For 88 ab cf. *Medinī* p. 180 147 cd; — CD च खिलीरके for वारिवालके.
89 — b) C खनकं for खनकः.
90 After 90 ab C adds खपुलेख्यलेखनीशूचीकोरके before मुस्तके. Cf. 75 ab.
92 — b) माद्रिये ; B गुग्गुलौ ; — d) C om. ग्रंथिपर्ण.
94 — b) A गंडका, D खड्ग for खड्गि ; — c) CD °विच्छेद for °वच्छेद
97 — a) D पाशीवृते for ग्रंथिवृते.
98 C. om. (hapl) from र········to वाद्यभांडेपि in v. 99.

**गोमुखं** कुटिलागारे वाद्यभाण्डेऽपि लेपने ।
**ग्रामणीर्भो**गिके श्रेष्ठे नापितेऽप्यधिपेऽपि च ॥ ९९ ॥
**गोष्पदं** ध्वनिते माने गवां गम्येऽपि गोचरे ।
**गर्जितो** मत्तमातङ्गे **गर्जितं** मेघनिःस्वने ॥ १०० ॥
**गोकर्णो**ऽनामिकाङ्गुष्ठमाने सर्पे मृगे गणे ।
**गह्वरं** तु बिले दम्भे **गैरिकं** धातुरुक्मयोः ॥ १०१ ॥
**गालवस्तु** मुनौ लोध्रे **गाङ्गेयः** स्कन्दभीष्मयोः ।
**गाङ्गेयं** मुस्तके स्वर्णे सुन्दरेऽपि कशेरुके ॥ १०२ ॥
**चक्राङ्गी** कटुरोहिण्यां **चक्राङ्गो** मानसौकसि ।
**चन्दनी** चन्द्रिकानद्योश्चन्दनो वानरे द्रुमे ॥ १०३ ॥
**चूडाला** चक्रलायां च **चूडाल**श्चूडया युते ।
**चलनो**ऽह्नौ धुते कम्पे **चलनी** करणान्तरे ॥ १०४ ॥
**चमसः** पिष्टभेदे स्याल्लट्टुके कर्पटेऽपि च ।
**चरणं** त्वदने शब्दे भ्रमणे **चरणः** पदे ॥ १०५ ॥
गोत्रे मूले बह्वृचादौ **चामरः** काशपुष्पयोः ।
माकन्दे केतने चापि **चमरी** हरिणीभिदि ॥ १०६ ॥
**चमर**श्चामरे दैत्ये **चञ्चलो**ऽनिलकामिनोः ।
**चपलः** क्षणिके मीने चिकुरे **चपलं** पुनः ॥ १०७ ॥
विलोले पारदे शीघ्रे **चपला** पिप्पलीश्रियोः ।
ऐरावत्यां **चिरण्टी** तु यौवनाश्रितयोषिति ॥ १०८ ॥
सुवासिन्यां च **चिपिटः** पिच्चिताततखा···योः (?) ।
**चित्रकं** श्वापदे चित्रे प्रजातौ व्यन्तरोरगे ॥ १०९ ॥
अनले तिलके चापि स्वस्तिके गदभिद्यपि ।
**चक्राटो** विषवैद्ये च दीनारे दुर्जनेऽपि च ॥ ११० ॥

---

101 — b) D मृगांतरे for मृगे गणे.
102 — b) CD गांगेय for गांगेयः.
103 — d) AB चंदने for चंदनो.
105 — c) D चलनं रासभे for चरणं त्वदने; C चरणं त्वदारणं ने (?).
108 — C om. (hapl.) from पारदे······to खाततयोः in verse 109.
110 — a) C वापि for चापि; — c) C चक्राटे for चक्राटः.

**चाम्पेय**श्चम्पके स्वर्णे किञ्जल्के नागकेस(C श)रे ।
**चक्कुरः** स्यन्दने वृक्षे **चत्वरं** तु चतुष्पथे ॥ १११ ॥
प्राङ्गणे स्थण्डिले चाथ **चिकुरः** सर्पशैलयोः ।
वृक्षे च भ्रूलये केशे चञ्चले विहगान्तरे ॥ ११२ ॥
**चन्दिर**स्तु गजे चन्द्रे **चन्द्रिलो** नापिते शिवे ।
वास्तुके चाथ **चात्वालो** यज्ञकुण्डेऽभगर्भयोः ॥ ११३ ॥
**छदनं** तु दले पक्षे **छेदनं** भिदि कर्त्तने ।
**छर्द्दनो**ऽलम्बुके [ षे ] निम्बे **छर्द्दनं** वमने स्मृतम् ॥ ११४ ॥
**छगला**ख्या पुटे मेषे नीलिकारञ्जिताम्बरे ।
**छगली** त्वौषधीभेदे **छित्वरो** रिपुधूर्त्तयोः ॥ ११५ ॥
**जृम्भितं** वर्द्धिते रोगे जृम्भणोत्फुल्लयोरपि ।
चेष्टितेऽथ **जिगीषा** स्याज्जयेच्छाव्यवसाययोः ॥ ११६ ॥
**जयनं** तुरगादीनां सन्नाहे विजये स्मृतं ।
**जर्जर**स्तु जराजीर्णे कोकिले वासवध्वजे ॥ ११७ ॥
**जीवकः** प्राणके ज्येष्ठे क्षपणे वृद्धिजीविनि ।
सेवके चासने वृक्षे व्यालग्राहेऽथ **जीविका** ॥ ११८ ॥
वर्त्तनेऽपि च जीवन्त्यां **जतुकं** हिङ्गुलाक्षयोः ।
**जरणो** जीरके कृष्णजीरके रुचके जले ॥ ११९ ॥
**जटायु**र्विहगे वृक्षे गुग्गुले **जम्भलः** पुनः ।
देवताभिदि जम्बीरे **जम्बूलः** क्रकचच्छदे ॥ १२० ॥

---

112 — a) D चिकुरः केशे for स्थंडिले चाथ; — b) D चकुरः for चिकुरः; — c) D वृक्षांतरे गृहे for वृक्षे च भ्रूलये, C पादपे for वृक्षे च.

113 — a) A चंचिरः (?) for चंदिरः; C om चंद्रे; — d) D शिशावपि for अभ्रगर्भयोः.

114 — For 114ab cf. *Haimakośa* 3. 367ab; — d) D वमनं for वमने.

115 — d) A मूर्त्तयोः for धूर्त्तयोः.

116 — a) B वर्द्धने for वर्द्धिते; ABC रागे for रोगे.

118 — c) D चातके for च आसने.

119 — a) C नर्त्तने for वर्त्तने; C जीवल्यां for जीवंत्यां; for 119b cf. *Medinī* p. 10, 91d and *Haimakośa* 3. 46d.

120 — c) C om जंबीरे.

जम्बूवृक्षेऽपि जम्बालं कर्दमे कर्दमान्तरे ।
जङ्गलं पिशितो गर्त्ते निर्जलस्थानदेशयोः ॥ १२१ ॥
जीमूतो जलदे शैले जीवनं वृत्तिजन्मनोः ।
संहतावुदके वृक्षे जम्बुकः फेरुपाशिनोः ॥ १२२ ॥
जगती भुवने भूमौ लोकेऽपि च्छन्दसां भिदि ।
जठरं तूदरे चित्ते कठिने तालभिद्यपि ॥ १२३ ॥
टगरष्टङ्कणे वृक्षे केकराख्येऽथ टङ्कणः ।
कोपेऽश्मदारणे टङ्के टङ्करी वक्रवाद्ययोः ॥ १२४ ॥
तरलश्चपले खड्गे हारमध्यमणौ बले ।
भास्वरे त्रिदिवं ख्यातमाकाशसुरलोकयोः ॥ १२५ ॥
तुषारः शीकरे शीते तरस्वी वेगवत्तरे ।
बलिष्ठे तिलकं वृक्षे चित्रके तिलकालके ॥ १२६ ॥
ललामे रुचके क्लोम्नि तैतिलं तिलपर्पटे ।
गण्डके करणे चाथ तलिमं कुट्टिमे स्मृतम् ॥ १२७ ॥
तल्पे विताने तलिनं स्वल्पे तल्पेऽपि निर्मले ।
तोदनं पीडने तोत्रे तरसं बलमांसयोः ॥ १२८ ॥
तेमनं व्यञ्जने क्लेदे तेमनी चुल्हिभिद्यपि ।
तरणिस्तु तरीसूर्यकुमारीतरुणांशुषु ॥ १२९ ॥
यष्ट्यरुध्योस्तरुणो यूनि नूतनैरण्डयोः सुमे ।
तक्षकः पन्नगे तक्ष्णि वृक्षभेदेऽथ तण्डकः ॥ १३० ॥
खञ्जरीटे तरुस्कन्धे फेने मन्दिरदारुणि ।
तारको नाविके दैत्ये तारकं नेत्रतारयोः ॥ १३१ ॥

---

121 — c) ABC गर्त्त.
122 — c) D जीवे for वृक्षे.
123 — c) D हृदये for तूदरे; — d) B कठिनेपि नियंत्रिते for कठिने ताल°.
124 — b) BCD टङ्करी for टंकणः — For 124cd BCD read: वाद्ये(व्यादे) वक्रेपि टंकारो ज्यारवे विदितेद्भुते.
125 — c) A भास्करे for भास्वरे. C adds vv. 125–34 in margin.
128 — a) CD खड्गे for तल्पे; D तलिमं for तलिनं.
130 — a) D तरुणो नूतने for यष्ट्यरुध्योः.
131 — b) BC सदन for मंदिर.

नक्षत्रे च **त्रिशङ्कुस्तु** मार्जारे शलभे नृपे ।
**तूलिका**लेख्यलेखिन्यां तूलतल्पशलाकयोः ॥ १३२ ॥
**तमालो** वरुणे खड्गे पुण्ड्रतापिच्छयोरपि ।
**तुम(मु)लं** भीमसंग्रामे **तुमुलस्तु** बिभीतके ॥ १३३ ॥
**दार्वीणं** मृष्टपत्रे स्याद्धरितालीरसे स्मृतं ।
**द्वितीया** तिथिगेहिन्योर्**द्रविणं** तु पराक्रमे ॥ १३४ ॥
दृश्यते द्युम्नवद्द्रव्ये पित्तलौषधसंघयोः ।
**दारदः** पारदे वत्सनागे हिङ्गुलवर्णयोः ॥ १३५ ॥
**द्विजन्मा** वौ रदे विप्रे **द्वापरः** संशये युगे ।
**देवनं** तु जिगीषायां व्यवहारविहारयोः ॥ १३६ ॥
**दुर्जातं** व्यसनेऽसम्यग्जातवस्तुनि पठ्यते ।
**दीपितं** भासिते दग्धे तथा निर्भासितेऽपि च ॥ १३७ ॥
**दुकूलं** स्वम्बरे पट्टकूले भूर्जदलेऽपि च ।
**दायादस्तनये** ज्ञातौ **दिवौकाश्चा**तके सुरे ॥ १३८ ॥
**दारको** भेदके पुत्रे **दीप्यकं** त्वजमोदके ।
यवान्यां **दीपको** वृत्तालंकारे पक्षिभिद्यपि ॥ १३९ ॥
दीपे दीप्तिकृति स्यातौ **द्विजातिः** पक्षिविप्रयोः ।
**दुर्मुखः** करिणां भेदे मुखरे कपिवाजिनोः ॥ १४० ॥
**द्रोहाटो** गर्दभे दुष्टो बिडालप्रतिकेऽपि च ।
मृगालुब्धे चतुष्पथ्यां **द्रमथो** दमदण्डयोः ॥ १४१ ॥
**दुर्दरो** (दर्दुरो) जलदे भेके शैले वाद्यस्य साधने ।
**दण्डारो** मत्तमातङ्गे कुलालारीघुयानयोः ॥ १४२ ॥
**दासेरः** करभे चेटे **दुर्वर्णं** स्वर्णरूप्ययोः ।
**दहनश्चित्र**के वह्नौ भल्लाते दुष्टचेष्टिते ॥ १४३ ॥

---

132 — c) B लेखन्यां; for 132d D reads: तले तूलस्य दृश्यते ।.
134 — ab) for 134ab cf. *Haimakośa* 3. 198ab.
139 — a) C बाले for पुत्रे; — b) CD दीपकं; — d) AB प्रक्ष° for पक्षि°
for 139cd D reads: वृत्तालंकरणे केकियवान्योरप्यदीपकः ।.
142 — For 142cd BC add: दर्शनं दर्पणे शास्त्रे दमनो वीरपुष्पयोः ।
143 — a) C om. करभे; — b) D °तारयोः for °रूप्ययोः.

**धेनुका** धेनुहस्तिन्योर्धेनुको दानवान्तरे ।
**धेनुकं** धेनुवृन्दे च नारीणां करणान्तरे ॥ १४४ ॥
**धिषण**स्त्रिदशाचार्ये **धिषणा** तु धियामपि ।
**धरण**स्तरणौ शेषे धान्ये लोके स्तने गिरौ ॥ १४५ ॥
**धरणं** धारणे मानविशेषे **धरणी** भुवि ।
**धूसरो** रासभे वर्णे **धूमलः** शकटाङ्गयोः ॥ १४६ ॥
**धाराट**श्चातके चाश्वे निर्दये निन्दकेऽपि च ।
**धवलो** वृषभे शुभ्रे कर्पूरे तरुचन्द्रयोः ॥ १४७ ॥
**धर्षणं** सुरते दुःखे **धर्षणी** पुंश्चलीरयोः ।
**धावनं** सुगतौ शौचे **धनपो** धनदाह्वयोः ॥ १४८ ॥
**निर्वेश**स्तूपभोगे च मूर्च्छने वेतनेऽपि च ।
**निकायो** वसतौ लक्ष्ये समूहे **निगमः** पुरे ॥ १४९ ॥
वेदे वणिक्पथे मार्गे **निसर्गो** विश्वनिर्मितौ ।
स्वभावे **निग्रहो** दण्डे मर्यादायां च भर्त्सने ॥ १५० ॥
**निवात**स्त्वाश्रये गाढसन्नाहे पवनात्यये ।
**निर्यूहः** शेखरे द्वारि निर्यासे नागदन्तके ॥ १५१ ॥
आपीडे **निःक्रमो** तुल्ये धीसामर्थ्ये च निर्गमे ।
**निःकृत**स्त्वधमे विप्रलब्धे विप्रकृतेऽपि च ॥ १५२ ॥
**नियमो** निश्चये ज्ञाने यन्त्रणायां व्रतेऽवधौ ।
**निर्वाणं** निर्वृतौ मोक्षे विनाशे दन्तिमज्जने ॥ १५३ ॥
**न्यग्रोध**स्तु वटे व्यामे **निपाकः** स्वेदपाकयोः ।
असत्कर्मफले चापि **नायको** नेतरि स्मृतः ॥ १५४ ॥

---

144 — a) D नंदिनीदेव्योः for धेनुहस्तिन्योः.

148 — For 148ab D reads: धर्षणं सुरते धृष्टौ धाटकश्च पचेतरौ ।

149 — d) C निगमे for निगमः.

150 — a) D वृक्षे for मार्गे.

151 — For 151cd cf. *Medinī* p. 241, 18ab; — cd) For cd D reads: निर्यासो दंतिनां दंते निवासे द्वारि (शे)खरे ।.

152 — a) BC कुल्ये for तुल्ये; D दुःकुले for तुल्ये; — b) D बुद्धिसामर्थ्ये for धीसामर्थ्ये.

153 — a) D निश्चले for निश्चये; — b) C व्रतौ for व्रते; — d) D °बंधने for °मज्जने.

प्रधाने मणिभेदे स्यान्नालिका कालनालयोः ।
चुल्हीरन्ध्रे बिले वंशभाजने नर्त्तको नटे ॥ १५५ ॥
द्विरदे केलिके मत्स्ये नर्तकी नृत्यकृत्स्त्रियां ।
निकृतिस्तु शठे शाठ्ये निस्त्रिंशः क्रूरखड्गयोः ॥ १५६ ॥
निषधः कठिने देशे निषधे स्वरे गिरौ (?) ।
हस्तके करिभेदे च निवेशः पुरविवाहयोः ॥ १५७ ॥
विन्यासेऽपि वरूथिन्यां नीकाशो निश्चये समे ।
निर्देशः कथने वाक्ये निदेशः परिभाषणे ॥ १५८ ॥
समीपे शासने दृष्टे निर्माणं तु समञ्जसे ।
विधाने सारनिर्मित्योर्नन्दकः कुलपालके ॥ १५९ ॥
हर्षके चक्रिणः खड्गे निषादः श्वपचे स्वरे ।
नलदं वीरणीमूले मकरन्देऽपि दृश्यते ॥ १६० ॥
नरको निरये दैत्ये नालीकः शल्यबाणयोः ।
अब्जेऽब्जे कमलारण्ये निर्मोकः सर्पकञ्चुके ॥ १६१ ॥
मोक्षके खेऽपि सन्नाहे निषङ्गो योगतूणयोः ।
नर्मठश्चूचुके षिङ्गे निशान्तं शान्तगेहयोः ॥ १६२ ॥
प्रभाते निर्वृतिः सौस्थ्ये मृत्यौ मोक्षे सुखेऽपि च ।
निर्ग्रन्थः श्रमणे भिक्षौ निर्द्धने कदलीद्रुमे ॥ १६३ ॥
पतङ्गं पारते दृष्टं शलभे पतङ्गः (गः ?) खगे ।
पद्मके तरणौ सस्ये जीमूते रक्तचन्दने ॥ १६४ ॥
प्रसवः शाखिनां पुष्पे फले गर्भस्य मोचने ।
अपत्येऽपि तथोत्पादे प्रभावः शक्तितेजसोः ॥ १६५ ॥

---

**156** — b) C om. कृत्स्त्रियां; — d) ABC निस्तृंशः (corrupt).
**157** — b) C शेखरे for स्वरे; — d) C निदेशः for निवेशः.
**159** — b) CD समञ्जसे for समुच्चये.
**160** — b) D निर्वादः for निषादः.
**161** — b) B °पाणयोः (?) for बाणयोः; — c) CD नलिके for अब्जेऽब्जे.
**162** — a) C चंचुके for चूचुके; CD खिङ्गे for षिंगे,
**163** — b) A निर्द्धनः for निर्द्धने.
**165** — c) B उत्पत्तौ for उत्पादे.

पर्वतः शैलदेवर्ष्योः पार्वती गिरिजस्त्रियां ।
जीवन्त्यां सल्लकीवल्लीविशेषाद्द्रौपदीषु च ॥ १६६ ॥
पुष्करं भेषजे तीर्थे पद्मदन्तिकराग्रयोः ।
द्वीपे तूर्यमुखे वारिव्योमखड्गफलाहिषु ॥ १६७ ॥
प्रभवः स्थानके मूले जन्महेतौ पराक्रमे ।
प्रज्ञानं तु धियां चिह्ने प्रकारो भेदसाम्ययोः ॥ १६८ ॥
पुलाको भक्तसिक्थेऽशे संक्षेपक्षुद्रधान्ययोः ।
पर्यङ्कः स्यात्परिकरे मञ्चके पृथुकोऽर्भके ॥ १६९ ॥
चिपिटेऽथ प्रकाशः स्यादुद्द्योते प्रकटे गदे ।
प्रमाणं कारणे सत्यजल्पिते मानशास्त्रयोः ॥ १७० ॥
पुङ्गवः गवि भैषज्ये श्रेष्ठे शब्दोत्तरस्थितः ।
पर्जन्यो वासवे पक्षिविशेषे गर्जदम्बुदे ॥ १७१ ॥
पर्याप्तं तु यथेच्छायां पूर्णे शक्तिनिषेधयोः ।
प्रदरो व्यूहभङ्गेषुगदभेदप्रभीतिषु ॥ १७२ ॥
पललं पिशिते पङ्के पिण्याके रक्षसि स्मृतं ।
परुषं कर्बुरे रूक्षे सदृशक्रूरवाक्ययोः ॥ १७३ ॥
पुद्गलः सुन्दराकारे कायात्मद्रविणेषु च ।
पादपो भूरुहे पादपीठे पादरथे स्मृतः ॥ १७४ ॥
प्रधानं तु महामात्रे प्रकृतावात्मपूज्ययोः ।
गीःपतौ पल्लवः षिङ्गविटपाञ्चललक्ष्मसु ॥ १७५ ॥
शृङ्गारे विस्तरेऽलक्तरागे किसलये बले ।
पुलको मणिदोषे स्यात्कृमिभिद्यश्रुसंहतौ ॥ १७६ ॥

---

168 — a) C प्रभावः for प्रभवः.
169 — d) D पृथुके for पृथुकः.
171 — b) BC स्यात् for शब्द.
172 — d) ABC °भेदे for °भेद°.
173 — d) D तालभेदकठोरयोः.
174 — d) A पादवीथे (?).
176 — b) ABC पि च for बले.

रोमाञ्चे सामयोन्यस्त्रभिन्ने ऽश्मह्रितालयोः ।
**प्रवालो** वल्लकीदण्डे विद्रुमे द्रुमपल्लवे ॥ १७७ ॥
प्रबलेऽथ **पलाशः** स्याद्रक्षोवर्णविशेषयोः ।
च्छदने शाखिनां भेदे पाशे तालान्तरेऽपि च ॥ १७८ ॥
**प्रघणो**ऽलिन्दके ताम्रकलशे लोहमुद्गरे ।
**प्रासादो** देवतागारे पृथिवीपालमन्दिरे ॥ १७९ ॥
**प्रणयः** स्यात्प्रार्थनायां प्रीतिविश्रम्भयोरपि ।
**पुरुषः** पूरुषे प्राणे पौरुषं तु पराक्रमे ॥ १८० ॥
ऊर्ध्वविस्तृतदोःपाणिनृमाने तेजसीष्यते ।
**पिण्डारो** महिषीपाले भिक्षुकद्रुमभेदयोः ॥ १८१ ॥
**पवित्रं** तु कुशे पूते **प्रगाढं** गाढकृच्छ्रयोः ।
**पिचुलो** निचुले नीरवायसे झाबुकद्रुमे ॥ १८२ ॥
**पीतनं** कुङ्कुमे पीतकाष्ठेऽपि हरितालके ।
**पिशुनं** कुङ्कुमे स्यात्तं **पिशुनः** सूचके खले ॥ १८३ ॥
**पौलस्त्यो** रावणे श्रीदे **पङ्कारो** वारिकुब्जके ।
सोपाने शैवले सेतौ **पटलं** पिटकौघयोः ॥ १८४ ॥
तिलकच्छदिषोर्नेत्ररोगेऽध्याये परिच्छदे ।
**पाठीमः** पाठके मीनविशेषे गुग्गुलद्रुमे ॥ १८५ ॥
**पाकलं** कुष्ठभैषज्ये **पाकलः** करिणां ज्वरे ।
**पाचलः** पवने वह्नौ राधनद्रव्यपाकयोः ॥ १८६ ॥
**पिङ्गलः** फणिभिच्चर्कपरिपार्श्वे कपौ शनौ ।
कपिले **पिङ्गला** नाडीवेश्ययोः करिणीभिदि ॥ १८७ ॥

---

178 — b) D राक्षसे सितवर्णयोः.
180 — c) D पूरुणे for पूरुषे.
181 — ab) For 181ab cf. *Medinī* p. 230 v. 42cd.
182 — C om. 182cd.
183 — C om. 183a.
185 — For 185ab D reads: तिलके संचये नेत्ररोगभित्परिवारयोः ।
186 — a) C पावनः for पाचलः.
187 — b) A पारि° for परि°.

पिण्याकः सिह्लके हिङ्गुवेरयोस्तिलचूर्णके ।
पिनाकः पांशुवर्षे स्यात् शर्वचापत्रिशूलयोः ॥ १८८ ॥
पेचकः करिलाङ्गूलमूलेऽघूकेऽथ पुष्पकं ।
कासीसे मृत्तिकाङ्गारशकटीनेत्ररोगयोः ॥ १८९ ॥
विमाने यक्षराजस्यायःकांस्येऽपि रसाञ्जने ।
प्लवगो वानरे भेके रेवन्ते सायकेऽपि च ॥ १९० ॥
पन्नगः पद्मको( का )ष्ठेऽहौ प्रयागो यज्ञशक्रयोः ।
अश्वे तीर्थेऽथ पुन्नागः पाण्डुनागे सितोत्पले ॥ १९१ ॥
द्रुमे नरे फले जात्याः पलिघः शालगोपुरे ।
काचस्य कलशे कुम्भे परञ्जः क्षुरिकाफले ॥ १९२ ॥
तैलयन्त्रेऽप्यसौ फेने पिच्चटं त्रपुसीसयोः ।
नेत्ररोगे परीष्टिः स्यात्परिचर्यापरीक्षयोः ॥ १९३ ॥
पूत्यण्डो गन्धकृत्कीटे गन्धैणेऽप्यथ पक्षिणी ।
पौर्णमासीपतत्पत्न्योः शाकिनीरजनीभिदोः ॥ १९४ ॥
पत्तोर्णं धौतकौशेये पत्तोर्णः शोणके स्मृतः ।
प्रमथा तु हरीतक्यां प्रमथः शिवसेवके ॥ १९५ ॥
फाल्गुनो मासभेदे स्यादर्जुनार्जुनवृक्षयोः ।
नदीजे फाल्गुनी पौर्णमासीभेदे च फेनिलम् ॥ १९६ ॥
सफेने बदरे कामफलेऽरिष्टेऽथ फालकः ।
चीरभेदे गतौ दिव्ये फेरवः फेररक्षसोः ॥ १९७ ॥
भूजम्बूः स्याच्च गोधूमे विकङ्कतफलेऽपि च ।
भूतीकं भूतृणे दृष्टं यवान्यां कट्फलौषधे ॥ १९८ ॥

---

189 — b) C om. मूले.
190 — b) A रसायने.
192 — After 192c BDC add: परिघो योगमूल्ययोः ॥ १९१ ॥ अर्गले परिघातेऽस्त्रे प्रतिघो रुट्विहंगयोः । परागेऽद्रौ ग्रहे रेणौ ।
193 — c) ABC नेत्रभेदे for नेत्ररोगे; ABC om. स्यात्.
195 — ab) For ab cf. *Haimakośa* 3. 204cd.
196 — For पौर्णमासी……फेनिलं D reads विद्यासौर्णमासीभिदीष्यते ।
197 — a) D फेनिलं for सफेने; — d) BD फेरु° for फेर°.
198 — a) D भूजंतुः for भूजंबुः.

घनसारेऽपि भूनिम्बे **भूकेशः** शैवले द्रुमे ।
**भ्रामके(को)** जम्बुके दुष्टे सूर्यावर्त्ताश्मभेदयोः ॥ १९९ ॥
**भावाटः** कामुके साधुनिवेशो भावके स्मृतः ।
**भारती** पक्षिणीवाचो(चि) वृत्तौ वचसि **भारतम्** ॥ २०० ॥
पुराणद्वीपयोरङ्गे **भरतो** नटशास्त्रयोः ।
मुनौ रामानुजे भूपे क्षेत्रेऽपि शबरे जिने ॥ २०१ ॥
**भ्रातृव्यो** भ्रातृजे शत्रौ **भुवनं** विष्टपे जले ।
**भूतात्मा** विधौ देहे **भ्रमरः** षट्पदेऽभिके(?) ॥ २०२ ॥
करणे **भ्रामरं** क्षौद्रभेदे दृषदि **भास्करः** ।
वह्नौ रवौ च **भार्योरुः** परनारीरते मृगे ॥ २०३ ॥
**मल्लिका** मृत्तिकापात्रे वाद्ये (?) मीने सुमान्तरे ।
**मोचकः** कदलीशिग्रुद्रुममोक्तृविरागिषु ॥ २०४ ॥
**मेचकस्तिमिरे** कृष्णे श्यामले केकिचन्द्रके ।
**मोचाटः** कदलीसारे चन्दने कृष्णजीरके ॥ २०५ ॥
**मालती** तु स्त्रियां जातीकाकमाचीसरित्स्वपि ।
ज्योत्स्नानिशाविशल्यासु **माकन्द्यामलकीफले** ॥ २०६ ॥
**माकन्दो** मन्मथे चूते **मुकुन्दः** पारदे हरौ ।
निधौ तालेऽथ **मेनादो** मार्जारे मेषकेकिनोः ॥ २०७ ॥
**मञ्जरी** वल्लरीस्थूलमुक्तयोस्तिलकद्रुमे ।
**मुदिरः** कामुके मेघे **महेन्द्रो** वासवे गिरौ ॥ २०८ ॥
**माठरो** वाडवे व्यासे तिग्मरश्म्यनुगेऽपि च ।
**मुहिरो** मूढिते कामे **मिहिरोऽर्केऽब्दबुद्धयोः** ॥ २०९ ॥

---

199 — c) CD भ्रमको for भ्रामको.
200 — d) CD वृत्तिर्मिथ्य for वृत्तौ वचसि.
202 — c) CD विविधो for विधौ.
204 — b) AD खाद्ये (?) for वाद्ये.
205 — c) A om. सारे.
206 — d) D द्रु(द्रु)मे for °फले.
208 — d) C माहेंद्रे for महेंद्रः.

मुर्मुरः सूर्यतुरगे तुषाग्नौ मकरध्वजे ।
मण्डलं वर्त्तुले देशे बिम्बे द्वादशराजके ॥ २१० ॥
कुष्ठभेदे शुनि श्वाने संघाते परिधावहौ ।
मसूरा पण्ययोषायां व्रीहिभेदेऽथ मर्म्मरः ॥ २११ ॥
शुष्कपत्रध्वनौ वस्त्रे मर्मरी पीतदारुणि ।
मुद्गरः कोरके शस्त्रे जाले लोष्टादिभेदने ॥ २१२ ॥
मन्थरो विपुले मन्दे मथिकोशेऽपि सूचके ।
माधवो भूपतौ मासि वसन्ते गरुडध्वजे ॥ २१३ ॥
मदनो मन्मथे वृक्षे मधूच्छिष्टवसन्तयोः ।
मन्दरस्त्रिदिवे सीरे मन्दारे मन्दशैलयोः ॥ २१४ ॥
मन्दिरं नगरे गेहे मन्दिरो मकरालये ।
मन्दारः पारिभद्रेऽर्कपर्णे देवद्रुमान्तरे ॥ २१५ ॥
यमकं च्छन्दसां भेदे यमको यमजे व्रते ।
याजको याज्ञिके पृथ्वीपाले दन्तिनि यापनम् ॥ २१६ ॥
निराशे कालविक्षेपे वर्त्तने चाथ योजनं ।
युक्तावपि चतुःक्रोश्यां परमात्मन्यपीष्यते ॥ २१७ ॥
रोहितो लोहिते मत्स्ये शक्रचापे मृगान्तरे ।
रोहीतकद्रुमे धीरे रुधिरं कुङ्कुमेऽसृजि ॥ २१८ ॥
मङ्गले रजनीरात्रौ हरिद्रायां च रैवतः ।
उज्जयन्ते सुवर्णालौ पिनाकिन्यपि वर्त्तते ॥ २१९ ॥

---

210 — a) ACD तुरगे सूर्ये ( C भानौ ) for सूर्यतुरगे.

211 — a) BD कुष्ठभेदे च ; — b) After संघाते D adds भूभागे. — cd ) D om. cd.

212 — ab ) D om. ab.

213 — c) D मथुरो (?) for मंथरो.

214 — a) D मत्ते for वृक्षे ; — c) C मंदिरः for मंदरः.

216 — c) B भूमी° for पृथ्वी°.

217 — d) D वर्त्तते for इष्यते.

218 — Before v. 218 D inserts v. 220.

219 — c) A सुपर्णाद्रौ for सुवर्णालौ ; — d) D [illegible] for पिनाकिनि.

**रूपकं** नाटकाद्येषु वृत्तालङ्कारधूर्त्तयोः ।
**रोमन्थस्तु** पशूद्गारे दृश्यते कीटवर्त्तने ॥ २२० ॥
**रोहिणी** गवि नक्षत्रे सोमवल्कोमयोर्गदे ।
**रोदनं** क्रन्दने चास्रे **रोचना** वरयोषिति ॥ २२१ ॥
गोपित्ते रक्तकल्हारे **रेवती** मातृतारयोः ।
सीरपाणिप्रियायां च **राजीवो** मृगमत्स्ययोः ॥ २२२ ॥
**रजको** धावके कीरे **रथाङ्गश्चक्र**कोकयोः ।
**रक्ताङ्गः** पृथिवीपुत्रे कम्पिल्ले विद्रुमे स्मृतः ॥ २२३ ॥
**रक्ताङ्गा** रक्तिकावल्यां **रजतो** नददन्तयोः ।
दुर्वर्णे धवले शैले शोणिते हारहस्तिनोः ॥ २२४ ॥
**लूनकस्तु** पशौ भिन्ने भवेदौषधभिद्यपि ।
**लोचको** मांसपिण्डे स्यात्कदलीनीलवस्त्रयोः ॥ २२५ ॥
कज्जले कर्णपूरे च ज्यायां भ्रूश्लथचर्मणि ।
नेत्रतारेऽपि निर्बुद्धौ महिलाभालभूषणे ॥ २२६ ॥
**लक्ष्मणो** राघवे श्रीदे **लक्ष्मणं** नामचिह्नयोः ।
**लक्ष्मणा** त्वौषधीभेदे दृश्यते सारसस्त्रियाम् ॥ २२७ ॥
**लासको** नर्त्तके चापि मयूरे **लवणो** रसे ।
राक्षसे **लवणा** भायां **लोहितो** मङ्गले नदे ॥ २२८ ॥
**लोहितं** कुङ्कुमे युद्धे गोशीर्षे रक्तचन्दने ।
रक्तेऽथ **ललितं** रम्ये हारभेदेऽपि वाञ्छिते ॥ २२९ ॥
**लोमशा** शाकिनीभेदे जटिलाकाकजङ्घयोः ।
**लोमशो** रोमले मेषविशेषे मुनिभिद्यपि ॥ २३० ॥
**विधानं** वैरिणां भेदे विधावभ्यर्चने धने ।
दन्तिनां कवले सन्धौ वेतनोपाययोरपि ॥ २३१ ॥

---

221 — a) B तारायां for नक्षत्रे.
223 — b) C °केकयोः for °कोकयोः.
227 — b) BD लक्षणं for लक्ष्मणं.
230 — b) ACD कुटिला for जटिला.

**व्यायतं** विपुले गाढे व्यापृतेऽतिशये स्मृतं ।
**व्रततिर्**विस्तृतौ वल्ल्यां **व्याघातो** योगविघ्नयोः ॥ २३२ ॥
प्रहारेऽथ **विनीतः** स्याद्वाणिज्ये विजितेन्द्रिये ।
शिक्षिते कुशले चाश्वे **वृश्चिको** राशिकीटयोः ॥ २३३ ॥
**विमानं** नाकिनां याने सप्तभौमिकमन्दिरे ।
**बाहुजः** क्षत्रिये कीरे स्वयंजाततिले स्मृतः ॥ २३४ ॥
**व्यलीकं** पीडनेऽकार्ये व्यङ्गवैलक्ष्ययोरपि ।
**विग्रहो** विस्तरे युद्धे वाक्यखण्डनदेहयोः ॥ २३५ ॥
**विविक्तं** विजने पूतेऽप्यसम्बाधे विवेकिनि ।
**विषाणं** दन्तिनां दन्ते शृङ्गे कोलरदे तटे ॥ २३६ ॥
**वेष्टनं** मुकुटे वाटे युध्युष्णीषे च **विक्रमः** ।
क्रान्तौ शक्तौ **विलोमः** स्यात्प्रतीपे वरुणेऽप्यहौ ॥ २३७ ॥
**वामनो** भूरुहे विष्णौ खर्वेऽप्याशागजान्तरे ।
**विद्रुमः** पल्लवे वृक्षे प्रवालमणिरक्तयोः ॥ २३८ ॥
**वराकः** संयुगे शोच्ये **वर्णकः** स्याद्विलेपने ।
चन्दने चारणे चाथ **वर्त्तको**ऽश्वखुरे खगे ॥ २३९ ॥
**वस्तुको** रोमके विच्चे (?) शिवमल्यर्कपर्णयोः ।
**विवेकस्तु** जलद्रोण्यां विचारैकान्तयोरपि ॥ २४० ॥
**बाल्हिकस्**तुरगे देशे **वाल्हिकं** हिङ्गुवेरयोः ।
**वैजिकः** प्रथमाङ्कूरे शिग्रुतैले च कारणे ॥ २४१ ॥
**धभ्रको** नकुले धूर्त्ते जम्बुके **विशिखः** शरे ।
**वैशाखः** खज्जके मासे **विशाखो** याचके गुहे ॥ २४२ ॥

---

**232** — a) A गाहे for गाढे; — c) D विस्तरे for विस्तृतौ.
**233** — c) C वाहे for चाश्वे.
**234** — a) C विमानः for विमानं; — b) ABC °भूमिक° for °भौमिक°.
**236** — d) B °द्विजे for °रदे; — d) D शिखरकालयोः for कोलरदे तटे.
**238** — a) D अलंकृतौ for भूरुहे.
**239** — d) A om. अश्वखुरे.
**240** — b) For 240b cf. *Medinī* p. 16. 152b and *Haimakośa* 3. 86b.
**242** — a) A om. कुले धूर्त्ते.

**विशिखा** पदवीकुत्स्योर्**विशाखा** भकटिल्लयोः ।
**व्यञ्जनं** तेमने कादौ **वासन्तः** कोकिले विटे ॥ २४३ ॥
चूते चोष्ट्रे च **वासन्ती** माधवीयूथिकाभिदोः ।
तथैव पाटलावृक्षे **विधाता** कामवेधसोः ॥ २४४ ॥
**वयःस्था**मलकी ब्राह्मीकाकोलीशाल्मलीषु च ।
गुडूच्यां च तथैलायां **वमथु**र्वमने गदे ॥ २४५ ॥
**वनश्वा** गन्धमार्जारे शार्दूले विप्रतारके ।
**विटपो** विस्तरे स्तम्बे पल्लवे खङ्गिशाखयोः ॥ २४६ ॥
वृक्षेऽपि **वृषभ**स्त्वादिजिनेन्द्रे गवि पुंगवे ।
**वल्लूरं** विपिनक्षेत्रे वाहनोषरयोः स्मृतम् ॥ २४७ ॥
कोलमांसे शुष्कफले **वल्लूरं** क्षेत्रकुञ्जयोः ।
शाद्वले वृक्षमञ्जर्यो**र्बिडालो** विहगान्तरे ॥ २४८ ॥
नेत्रगोलेऽपि मार्जारे **विहायः** खविहङ्गयोः ।
**बुक्कसः** श्वपचे नीचे **विबुधः** पण्डिते सुरे ॥ २४९ ॥
**वनजं** कमले दृष्टं **वनजो** मुस्तके गजे ।
**वनजा** मुद्गपर्ण्यां च **वरिष्ठं** वरताम्रयोः ॥ २५० ॥
**वासरो** रागभेदेऽह्नि **वारुणी** मदिरादिशोः ।
**वर्द्धनं** च्छेदने वृद्धौ **वैकुण्ठो** विष्णुशक्रयोः ॥ २५१ ॥
**शुश्रूषा** परिचर्यायां श्रोतुमिच्छाकथानयोः ।
**शिशुको** बालके वृक्षविशेषशिशुमारयोः ॥ २५२ ॥

---

**244** — b) C मागधी for माधवी; AC om. यूथिका; — cd) C om. cd.
**245** — ab) C om. ab; — c) C om. गुडूच्यां च तथै (hapl.).
**246** — a) BC विस्तृतौ for विस्तरे; A om. विस्तरे स्तंबे.
**248** — a) D अतिशुष्कफले चापि; — c) ABC जल° for वृक्ष°; D मंजर्यां for मंजर्योः.
**249** — a) A om. नेत्र.
**251** C adds 251 in marg. (*sec. m.*); — a) A सरो (?) for वासरो; — b) A om. दिशोः; for 251ab cf. *Ajayapāla* (*Nānārthasaṃgraha*) p. 85, v. 17cd.
**252** C adds 252 in marg. (*sec. m.*); — d) C °विशेषे for °विशेष.

श्रवणं तु श्रुतौ कर्णे श्रवणातारकान्तरे ।
शिशिरं शीतले शीते तालमेरुतुभेदयोः ॥ २५३ ॥
शम्बरं सलिले चित्रे शम्बरो मृगदैत्ययोः ।
मीनेऽद्रौ शबरो वारि म्लेच्छभेदमहेशयोः ॥ २५४ ॥
शम्याको याचके कीले वियाते चतुरङ्गुले ।
शार्करः शर्करापिण्डे फेने क्षीरस्य शीतकः ॥ २५५ ॥
शीतकालेऽलसे सुस्थे शल्लकाख्या शिरोरुजि ।
शङ्खे च कल्ये सीधे श्रीपर्णी तु द्रुमान्तरे ॥ २५६ ॥
श्रीपर्णं वह्निमन्थेऽब्जे शिखरं पुलके तटे ।
पक्वदाडिमबीजाभमाणिक्याग्रद्रुमाग्रयोः ॥ २५७ ॥
शर्करा कर्परांशेऽश्मदेशभेदसितासु च ।
शुषिरं विवरे वाद्ये शकुन्तो भासपक्षिणोः ॥ २५८ ॥
शृगालो जम्बुके दैत्ये शाल्मलिर्द्वीपवृक्षयोः ।
श्यामलः पिप्पले नीले शार्दूलः पशुभिद्यपि ॥ २५९ ॥
व्याघ्रे रक्षोविशेषे स्यात्प्राधान्ये चोत्तरस्थितः ।
शैलूषस्तु नटे बिल्वे शर्वरी रात्रियोषयोः ॥ २६० ॥
शाकुनं विहगे ख्यातं माङ्गल्ये शुभलक्षणे ।
शकलं वल्कले खण्डे शिलन्ध्रो मीनछत्रयोः ॥ २६१ ॥
शिल(ली)न्ध्रं कवके रम्भापुष्पेऽपि त्रिपुटे स्मृतम् ।
शिल(ली)न्ध्री पक्षिणीभेदे दृष्टा किंशुलके मृदि ॥ २६२ ॥
षड्ग्रन्था तु वचासट्योः षड्ग्रन्थो भूरुहान्तरे ।
षण्डाली सरसीतैलमानयोः कामुकस्त्रियाम् ॥ २६३ ॥

---

256 — a) D ताले for सुस्थे; A om. सुस्थे; — c) BC कल्ये for शङ्खे.
257 — b) D भटे (?) for तटे.
258 — b) AD देष्टा° (?) for देश°.
260 — b) D वत्तरे° for उत्तर°.
261 — d) portion scratched out in C.
262 — b) AD °पुष्पागे for °पुष्पेऽपि.
263 — a) A om. षण्डा.

**समीका** नीलिकावल्ल्योः **संमीको** नाकुवृक्षयोः ।
सुमुखः फणिनां भेदे पण्डिते गरुडात्मजे ॥ २६४ ॥
वक्रतुण्डान्तरे चाथ **संहृतं** मिलिते हृते ।
**सुषमं** तु समे रम्ये **सुषीमः** शिशिरे तरौ ॥ २६५ ॥
सुन्दरे **सुषमो**त्कृष्टप्रभाकालभिदोरपि ।
**सम्पर्कः** सुरते पृक्तौ **सरणिः** श्रेणिमार्गयोः ॥ २६६ ॥
**साधनं** दापने सिद्धौ मृतदाहे गतौ धने ।
उपायेऽनुगमे शिश्ने सैन्ये साधकमानयोः ॥ २६७ ॥
**समयो**ऽवसरे भाषा सम्पदोर्नियमेऽपि च ।
क्रियाकारेऽपि सङ्केते निर्देशे यमसंविदोः ॥ २६८ ॥
**सुमनाः** पण्डिते पुष्पे मालतीत्रिदिवौकसोः ।
**सन्तानो** नाकिनां वृक्षे सन्ततौ गोत्रपुत्रयोः ॥ २६९ ॥
**सदनं** मन्दिरे तोये **स्यन्दनं** प्रस्रवे जले ।
**स्यन्दन**स्तु रथे वृक्षे **संव्यानं** च्छादनेऽम्बरे ॥ २७० ॥
**समितिः** संगमे युद्धे सभायां समरेऽपि च ।
**समाधि**र्नियमध्यानमौनेषु च समर्थने ॥ २७१ ॥
**संगरो** गरले कष्टे क्रियाकारविनाशयोः ।
अङ्गीकारेऽपि संग्रामे **संगरं** तु शमीफले ॥ २७२ ॥
**सारङ्गो** हरिणे शैले कुञ्जरे चातके खगे ।
शबले चिञ्चिरीके च सम्भोगे रतभोगयोः ॥ २७३ ॥

---

264 For 264ab BC read: सारसौ विहगे चंद्रे सारसं सरसीरुहे ।
265 — d) AD शिखरे for शिशिरे.
266 — a) D सुगमो° for सुषमो°.
267 — a) AD दापनं; — b) BCD transp. गतौ and धने; — d) for d D reads: °नीकिनीसानहेतुषु ।.
268 — Before 268 C repeats समयोऽवसरे भाषा संपदोः । (hapl.).
270 — b) C प्रसवे for प्रस्रवे; — d) D संख्यानं (?) for संव्यानं.
271 — a) C om. युद्धे; B साम्ये for युद्धे; — d) For d D reads: [illegible]
272 — d) AD च for तु.

**शुण्डायां सर्वगो** रुद्रे **सर्वगं** सलिले स्मृतं ।
**सरटस्तु** शठे भूषाविशेषे क्रकलासयोः ॥ २७४ ॥
**सम्बाधः** संकटे योनौ **सुवर्ण** भर्मकर्षयोः ।
**सुवर्णा** लोमखे विस्ते कृष्णागरुणि **संभ्रमः** ॥ २७५ ॥
संवेगयत्नयोर्भीतौ **सुदामा** शैलमेघयोः ।
**संस्तरः** प्रस्तरे यज्ञे **सेनानीः** सैन्यपे गुहे ॥ २७६ ॥
**सुपर्वा** त्रिदशे वंशे बाणे धूमेऽपि पर्वणि ।
**सुकर्मा** सत्क्रिये योगविशेषे सुरशिल्पिनि ॥ २७७ ॥
**सावित्री** देवताभेदे **सावित्रः** पार्वतीपतौ ।
**सम्भारः** संभृतौ वृन्दे **सौवीरं** काञ्जिकेऽञ्जने ॥ २७८ ॥
**हारको** गद्यविज्ञानभिदोः कितवचोरयोः ।
**हसन्ती** शाकिनीभेदे मल्लिकाङ्गारपात्रयोः ॥ २७९ ॥
**हरेणुः** कुलयोषायां रेणुकायां सतीनके ।
**हरिणी** रोचनावृत्तमृगीस्वर्णप्रभासु च ॥ २८० ॥
**हायनो** वत्सरव्रीहिकिरणेषु तथौषधे ।
**हिरण्यं** कनके मानभेदे धातुवराटयोः ॥ २८१ ॥
**हृदयं** वक्षसि स्वान्ते **हरिणः** पाण्डुरे मृगे ।
**हृषितो** रम्यरोमाञ्चजातहर्षेषु **हायनः** ॥ २८२ ॥
वत्सरव्रीहिकीलासु **हिरण्यं** द्रविणे क्षये ।
अकुप्ये कनके मानभेदे धातुवराटयोः ॥ २८३ ॥
**हेरम्बो** महिषे शौर्यगर्जिते गणनायके ।
**हुडुकस्तु** मदोन्मत्ते वाद्यभिज्जलपक्षिणोः ॥ २८४ ॥

---

274 — a) D सर्वदः श्रीपतौ for शुंडायां सर्वगो ; — b) BC स्याद्विभो सर्वगं जले.
276 — b) C गिरि° for शैल°; — c) C संस्तरे यम for संस्तरः प्रस्तरे.
278 — b) BCD शर्वविप्रयोः for पार्वतीपतौ.
281 D inserts v. 281 after v. 282; BC om. v. 281; — d) D om. धातु.
282 — a) D जठरे चित्ते for वक्षसि स्वान्ते; — d) D विस्मिते for हायनः.
283 D om. v. 283 which is practically a repeatition of v. 281.
284 — a) D सूर्य for शौर्य; — d) For d B reads: वाद्यभेदे च पक्षिणि; C पक्षिणोरपि for जलपक्षिणोः.

**हारीतः** पक्षिणां भेदे मुनौ छद्मनि दृश्यते ।
**हेरुकस्तु** महाकालगणबुद्धविशेषयोः ॥ २८५ ॥
**क्षत्रियं** द्रोहकृद्रोगे क्षेत्रोत्पन्नतृणादिषु ।
अन्यदेहचिकित्सार्हे **क्षत्रियः** पारदारिके ॥ २८६ ॥
**क्षेपणी** जालभेदे स्यान्नौकादण्डे शरान्तरे ।
**क्षुरकः** पादपे पत्रे **क्षुवथुः** क्षुतकासयोः ॥ २८७ ॥
**क्षुल्लकौ** दुःखिते स्तोके कनिष्ठे खलशंखयोः ।
**क्षारको** जालके पाशे पक्षिणां पिटके रसे ॥ २८८ ॥
**क्षणदो** गणके दृष्टः **क्षणदं** सलिले स्मृतं ।
**क्षणदा** तु विभावर्यां **क्षेत्रज्ञो** निपुणात्मनोः ॥ २८९ ॥
श्रीमत्सोमभवः सलक्षसचिवो वाक्कण्ठभूषाङ्कभृत्
सन्प्रासूत सुतं महीपममलं सौभाग्यदेवी च यं ।
ग्रन्थे तद्रचितेऽज्ञजाड्यविपिनोदर्चिस्त्रिवर्णाभिधो
भूयो भूषणतां बभार रुचिरः काण्डस्तुरीयाग्रजः ॥ २९० ॥

॥ **इत्यनेकार्थतिलके तृतीयः काण्डः** ॥

---

287 — d) CD कासहिक्कयोः for क्षुतकासयोः.

289 — a) C विष्टे (?) (D विद्यात्) for दृष्टः.

290 — a) BD श्रीमान्; — c) D तिमिरो° for विपिनो°.

Colophon: B adds the following colophon:

इति श्रीमहै(ही)पकृतौ महीपकोषस्यानेकार्थतिलके तृतीयः काण्डः परिसमाप्तः ॥

## अथ चतुर्थं काण्डम् ।

अथ संकीर्णवर्णाख्यश्चतुर्थोऽत्र विरच्यते ।
काण्डोऽयममलैः शब्दैरकाराद्यादिभिः क्रमात् ॥ १ ॥
**अपवर्गः** क्रियाशेषे त्यागे साफल्यमोक्षयोः ।
**अवष्टम्भ**स्तु संरम्भारम्भस्तम्भेषु हाटके ॥ २ ॥
**अभिजातः** स्थितौ प्राज्ञे न्याय्ये रूपकुलीनयोः ।
**अभिमान**ध्वनिः (?) प्रीतौ गर्वेऽपि ज्ञानहिंसयोः ॥ ३ ॥
**अभिषङ्ग**स्तथाक्रोशे शपथेऽपि पराभवे ।
**अवदातः** सिते रम्ये स्वर्णवर्णविशुद्धयोः ॥ ४ ॥
भवेद**लमको** मेके मधूके पद्मकेसरे ।
कोकिलेऽ**लिपको** भृङ्गे पिकेऽपि तरहिण्डके ॥ ५ ॥
**अङ्गारकः** कुजे दुष्ट उल्मुकांशे कुरण्टके ।
**अङ्गारके**क्षुकाण्डे स्यात्किंशुकस्य च कोरके ॥ ६ ॥
**अध्यारूढं** समारूढेऽप्यधिकेऽपि च वर्त्तते ।
**अङ्गारिणी** हसन्त्यां च मार्त्तण्डत्यक्तदिश्यपि ॥ ७ ॥
**अङ्कपाली** परिष्वङ्गे धात्रीकोट्योर्गदद्रुहि ।
**अभिनिष्टान**मिच्छन्ति विसर्जनीयवर्णयोः ॥ ८ ॥
**अवग्रहणमि**च्छन्ति प्रतिरोधेऽप्यनादरे ।
**अपावृतः** स्वतन्त्रे स्यात्पिहिते तालभिद्यपि ॥ ९ ॥
**अतिमुक्तः** कलाहीने वासन्त्यां तिनिशे स्मृतः ।
**अवध्वस्तं** परित्यक्ते निन्दिते चावचूर्णिते ॥ १० ॥
**अपदेशो** भवेल्लक्षे(क्ष्ये) निमित्तव्याजयोरपि ।
**अन्तावसायी** शब्दोऽयं चाण्डाले नापिते स्मृतः ॥ ११ ॥

---

3 — a) D प्राप्तौ for प्राज्ञे.
5 — d) A om. तर ; B रतहिण्डके.
6 — b) D उत्सकांशे for उल्मुकांशे.
8 — b) For b D reads : धात्रा (त्री ?) पाल्यो गदद्रुहौ.

**अपभ्रंशो**ऽपपाते स्याद्भाषाभेदापशब्दयोः ।
**अधिवासो** गृहे वासेऽप्यग्रजन्मा द्विजेऽग्रजे ॥ १२ ॥
**अष्टापदं** सुवर्णे चाष्टापदः स[ श ]रभे मतः ।
लूतापर्वतभिच्चन्द्रमल्लीसारीफलेषु च ॥ १३ ॥
भवेदग्निशिखाख्या च लाङ्गल्यां कुङ्कुमेऽपि च ।
मुनिजेऽग्निमुखे विप्रे भल्लाते चित्रके सुरे ॥ १४ ॥
दुर्जनेऽनुमतिः शिष्ये पूर्णिमाभिदनुज्ञयोः ।
**अरुष्करं** फले भल्लातकस्य व्रणकृत्यपि ॥ १५ ॥
**अधिष्ठानं** पुरे चक्रप्रभावाध्यासनेषु च ।
**अनूचानो** विवेकज्ञसाङ्गवेदविदोरपि ॥ १६ ॥
**अम्बरीषो** नृपे भ्राष्ट्रे किशोरे बुधसूर्ययोः ।
आम्रातेऽपि महेशेऽलंबुषस्तु छर्दनेऽपि च ॥ १७ ॥
**अलम्बुषा** पक्षिभेदे गण्डीर्यापणयोषयोः ।
अथा**भिष्यन्द** आस्रा[ स्रा ]वेऽतिवृद्धौ नयनामये ॥ १८ ॥
**आवेशनं** शिल्पिशालावेशयोर्भूतमन्दिरे ।
भवेदाच्छादनं वस्त्रे संपिधानेऽपवारणे ॥ १९ ॥
**आक्षेपको** मरुद्व्याधौ व्याधे स्यान्निन्दकेऽपि च ।
**आकल्पक**स्तमोमोहग्रन्थावु[ न्थिषू ]त्कलिकामुदोः ॥ २० ॥
**आरोहणं** समारोहे सोपानेऽपि प्ररोहणे ।
**आथर्वणो**ऽप्यथर्वज्ञवाडवेऽपि पुरोधसि ॥ २१ ॥
**आसुतीबल**शब्दोऽयं कल्यपाले च यज्वनि ।
**आत्माधीनः** सुते श्याले प्राणाधारे विदूषके ॥ २२ ॥

---

13 — b) D स्मृतः for मतः.
14 — c) D मनुजे for मुनिजे.
15 — c) D भल्लातके च for भल्लातकस्य.
16 — a) D तु नगर° for पुरे चक्र; for cd cf. *Medinī* p. 127 v. 165cd.
17 — a) C om. भ्राष्ट्रे; D देशे for भ्राष्ट्रे; — b) B बुद्ध° for बुध°.
20 — b) C निन्दके स्यात्, D निन्दाकरे करौ for स्यान्निंदकेऽपि च; for cd cf. *Medinī* p. 19 v. 175cd, and *Haima* 4. 3cd

आशाबन्धः समाश्वासे तथा मर्कटवासके ।
आडम्बरस्तु संरम्भे बृंहिते तूर्यनिःस्वने ॥ २३ ॥
अथाच्छुरितकं हासनखघातप्रभेदयोः ।
आत्मयोनिः स्मरे शम्भावात्मवीरो विदूषके ॥ २४ ॥
पराक्रमवृते श्याले पुत्रे चायोघनं वधे ।
आजावास्कन्दनं शोषे तिरस्कारसमीकयोः ॥ २५ ॥
इक्षुगन्धा पोटगले क्रोष्टीगोक्षुरयोः क्षुरे ।
इष्टगन्धः सुगन्धे स्यादिष्टगन्धं तु वालुके ॥ २६ ॥
इन्दुलेखा विधोः खण्डे सोमवल्ल्यमृतांशुषु ।
ईहामृगो वृके रूपकान्तरे जन्तुभिद्यपि ॥ २७ ॥
उपकारस्तूपकृतौ विकीर्णकुसुमादिषु ।
मन्देऽथोपनिषद्धर्मे वेदान्ते सद्रहस्ययोः ॥ २८ ॥
उपासनं शराभ्यासे शुश्रूषायां तथासने ।
उपह्वरं पुनः पार्श्वे रहःस्थानेऽप्युपक्रमः ॥ २९ ॥
प्रारम्भेऽपि चिकित्सायामुपधायां च विक्रमे ।
उपलब्धिर्भवेज्ज्ञाने तथा प्राप्तिमनीषयोः ॥ ३० ॥
उदुम्बरं भवेत्कुष्ठभेदे ताम्रेऽप्युदुम्बरः ।
अनोकु(क)हस्तरौ ताले देहल्यां पिण्डकेऽपि च ॥ ३१ ॥
उपतापं गदे विन्द्यादुपतप्तेऽप्यशर्मणि ।
उद्घाटकं घटीयन्त्रे दृश्यते चोपवारणे ॥ ३२ ॥
उपाहितोऽनलोत्पाते तथा चारोपिते स्मृतः ।
उदास्थितः प्रतीहारे प्रणध्यध्यक्षयोरपि ॥ ३३ ॥
उपरागपदं दृष्टं राहुग्रस्तेन्दुभास्करे (?) ।
विमाने दुर्जये राहावुपसर्गो गदे(द)मिदि ॥ ३४ ॥

---

25 — a) A श्याल° for श्याले पुत्रे.
30 — b) D अपीष्यते for च विक्रमे.
31 — c) ABC अनोकुहांतरे (?).
32 — b) B उपतप्तेऽथ.
34 — b) C राहुग्रस्तं तु° for राहुग्रस्तेंदु.

प्रादावुच्चिङ्गटो मीनभेदे कोपनपूरुषे ।
उद्दन्तुरो भवेत्तुङ्गे करालोत्कटदन्तयोः ॥ ३५ ॥
उपचारस्तु लञ्चायामारोपव्यवहारयोः ।
ऋषभध्वजशब्दोऽयं महेशजिनभेदयोः ॥ ३६ ॥
एडमूकध्वनिर्दृष्टः (?) शठे वाक्श्रुतिवर्जिते ।
भवेदेकपदं मार्गे तदात्वेऽप्येककुण्डलः ॥ ३७ ॥
रेवतीरमणे गौरीवरे किंपुरुषेश्वरे ।
ऐरावतः शक्रगजे नारङ्गे दिग्गजे द्रुमे ॥ ३८ ॥
ऐरावतं बलाराते ऋजुदीर्घशरासने ।
ऐरावती तडिद्भेदे सौदामिन्यां च पठ्यते ॥ ३९ ॥
ओषधीरमणो दृष्टः ऋषभौषधचन्द्रयोः ।
उदुम्बरो यमे रोगे फलादौ यज्ञशाखिनाम् ॥ ४० ॥
कालस्कन्धस्तमाले स्यात्तिन्दुके जीवकद्रुमे ।
कला(ल)धौतध्वनिः (?) स्वर्णे रजते च कलध्वनौ ॥ ४१ ॥
करहाटस्तरौ देशे पद्मकन्दप्रसूनयोः ।
अथ कौलेयकः सारमेये चापे कुलोद्भवे ॥ ४२ ॥
कृष्णवृन्ता पुनर्माषपर्णीपाटलिवृक्षयोः ।
पद्मे कामगुणो रागे स्मृतः सुरतभोगयोः ॥ ४३ ॥
कशेरुकं जले कन्दे पृष्ठस्यास्थनि कथ्यते ।
करवीरोऽसुरे खड्गे श्मशाने हयमारके ॥ ४४ ॥

---

35 — a) C om. प्रादौ.

36 — After 36 D adds: 'ऋभुदैवो बलारातौ दृश्यते तालभिन्नपि'।

38 — ab) After ऐरावतः D reads 'सुनासीर (रे?) द्विरदे दिग्गजांतरे' for शक्रगजे…द्रुमे.

39 — a) D बलारातिः for बलारातेः.

41 — d) C रूप्ये (D रूपौ?) for रजते; D कलह° for कल°.

42 — c) D adds पुनः after कौलेयकः.

43 — b) D पाटल° for पाटलि°.

44 — a) D वृष्टः for खड्गे; — d) D कूप(पा)णे for श्मशाने.

**अङ्कुष्ठे करवीरी** तु पुत्रिण्यामदितावपि ।
सद्रव्यां **कर्णिकारस्तु** कृतमाले द्रुमोत्पले ॥ ४५ ॥
**कटुकन्दः** शृङ्गवेरे शोभाञ्जनरसोनयोः ।
**कर्कोटकस्तु** माल्रभुजङ्गमविशेषयोः ॥ ४६ ॥
**कथाप्रसङ्ग** इत्येष वातूलविषवैद्ययोः ।
**कलविङ्कः** स्मृतो ग्रामचटकेऽपि कुलिङ्गके ॥ ४७ ॥
**कृष्णसारः** स्नुहावृक्षे शिंशिपामृगभेदयोः ।
**कूष्माण्डकस्तु** मार्जारे कूष्माण्डगणभेदयोः ॥ ४८ ॥
**कलकण्ठः** पिके पारापते हंसे च केकिनि ।
**कालकण्ठः** पिके खञ्जरीटे रुद्रमयूरयोः ॥ ४९ ॥
**कालपृष्ठो** मृगे कङ्के कर्णचापे धनुष्यपि ।
**कर्णपूरोऽ**वतंसे च नीलपद्मशिरीषयोः ॥ ५० ॥
**कादम्बरी** पुनर्मद्ये कोकिलाशाल्मभेदयोः ।
वाणीसारिकयोः **कादम्बरं** दधिसरे स्मृतम् ॥ ५१ ॥
सीधुमद्यभिदोः **कुम्भीनसी** लवणमातरि ।
**कुम्भीनसस्त्वहौ कुम्भयोनि**र्द्रोणे मुनावपि ॥ ५२ ॥
**कुमुद्वती** कैरविणीकुशपत्न्योः **कलध्वनिः** ।
पारापते कलायुक्ते परपुष्टे च केकिनि ॥ ५३ ॥
**कुरुविन्दः** पुनः पद्मरागे कल्माषमुस्तयोः ।
दर्पणे हिङ्गुलव्रीहिभिदोः **कर्कटकस्त्वहौ** ॥ ५४ ॥
बिल्वे **कुचन्दनं** वृक्षे पत्राङ्गे रक्तचन्दने ।
**कृकवाकुस्ताम्रचूडे** कृकलासमयूरयोः ॥ ५५ ॥

---

45 — cd) After सद्रव्यां D reads : चपलाभेदे कंकरे दुरमर्षणे ।
46 — b) For 46ab reads : गृध्रेऽथ कटुकंठस्स्यात् शृंगवेररसोनयोः ।
49 — d) ABC द्रुम° for रुद्र°.
50 — a) A कलपृष्ठः for कालपृष्ठः.
51 — a) D मेघे for मद्ये.
54 — a) ABC कुरुविंदध्वनिः for कुरुविंदः पुनः; — c) D हिंगुले व्रीहिभेदे.
55 — b) C पात्रांगे for पत्रांगे.

अथ **कौक्कु (क्कु) टिको** दूरे रितचक्षुषि दाम्भिके ।
**कटम्भरा** तु गोलोम्यां ( गोलायां ) वर्षाभूगजयोषयोः ॥ ५६ ॥
कटम्भरप्रसारिण्योः **काकरूको** दिगम्बरे ।
स्त्रीजिते पेचके दम्भे मीते **कोशातकः** कचे ॥ ५७ ॥
घोषे **कोशातकी** ज्योत्स्नीपटोल्योश्च **कुटंनटः** ।
शोणके स्याद्दासपुरेऽप्यथ **कार्यपुटध्वनिः** ॥ ५८ ॥
उन्मत्ते क्षपणेऽनर्थकरे हस्तकमिद्यपि ।
**कुण्डकीटस्तु** दाशीशे जारतो ब्राह्मणीसुते ॥ ५९ ॥
**कृष्णवर्त्मा** दुराचारे वीतिहोत्रे विधुंतुदे ।
**कामचारी** पुनः कम्रे कलविङ्के चरेऽपि च ॥ ६० ॥
**किष्कुपर्वा** पोटगले तथेक्षुत्वचिसारयोः ।
**कटखादक** इत्येष काचकुम्भे च खादके ॥ ६१ ॥
फेरवे कोकिले **कक्षावेक्षको** रङ्गजीविनि ।
द्वारपाले कवौ षिङ्गे शुद्धान्तोद्यानपालयोः ॥ ६२ ॥
**कृमिकण्टकस्तु** चित्राविडङ्गोदुम्बरेषु च ।
**कट्टिलकस्तु** पर्णासे वर्षाभूकारवेल्लयोः ॥ ६३ ॥
**खरालिकस्तु** नाराचोपधानग्रामणीषु च ।
**खञ्जरीटः** कृपाणाङ्गव्रतचारिणि खञ्जने ॥ ६४ ॥
**खण्डपशुः** शिवे राहौ रामे चूर्णप्रलेपिनि ।
किराते भेषजे चाथ **खर्वशाखः** कपौ क्षुपे ॥ ६५ ॥
**गोजागरिकमुद्दिष्टं** मङ्गले भक्ष्यकारके ।
**स्याद्गाढमुष्टिः** कृपणे कृपाणादिषु भण्यते ॥ ६६ ॥

---

57 — a) ABC कटंबरा for कटंभर॰; — d) D भवेत् for मीते.
60 — c) D विटे दृष्टः for पुनः कम्रे; — d) बुधैः for पि च.
61 — b) AB रसाल॰ for तथेक्षु; for 61ab cf. *Haima* 4. 169cd.
62 — a) B खादके फेरवे for फेरवे कोकिले.
63 — c) D ध्वनिर्दृष्टः for तु पर्णासे.
64 — c) D खञ्जरीटं for ॰रीटः.
65 — a) C om. from राहौ to स्याद्गाढ in v. 66. — b) BCD ॰करे तरौ for प्रलेपिनि.
66 — b) AB भक्ष्य॰ for कंदु॰.

गन्धवाहा तु नासायां गन्धवाहोऽनिले मृगे ।
गोरक्षजम्बू(:) गोधूमे गोरक्षे तन्दुलेऽपि च ॥ ६७ ॥
वृक्षे गोमेदकं रत्ने काकोले पत्रकेऽपि च ।
गोकुणिकाः वक्रनेत्रे पङ्कस्थे गव्युपेक्षके ॥ ६८ ॥
गोकण्टको गवां पद्भिर्निम्ने गोरक्षकेऽपि च ।
वृक्षे गन्धवती हालाकस्तूरीभूसुतीषु च ॥ ६९ ॥
गिरिसारध्वनि(?)र्लिङ्गे लोहे मलयपर्वते ।
ग्राममद्गु(द्गु)रिका शृङ्गीयुद्धयोर्गन्धमादनः ॥ ७० ॥
गन्धके वानरे शैले भ्रमरे गन्धमादनी ।
सुरायामौषधीभेदे गदयित्नुः स्मरास्त्रयोः ॥ ७१ ॥
अथो (?) घनरसो वारि मोरटेऽथ घनाघनः ।
घातके मत्तमातङ्गे वर्षुकाब्दे निरन्तरे ॥ ७२ ॥
शङ्के घर्घरिका सिन्धुभेदे वादित्रधान्ययोः ।
घोषवेषारिका ख्याता गणिकावल्लिभेदयोः ॥ ७३ ॥
चन्द्रहासो दशग्रीवे खड्गेऽसौ चिलमीलिका ।
खद्योते दृश्यते कण्ठीभेदेऽपि तडिद्भिदि ॥ ७४ ॥
चक्रवाटः क्रियारोहे पर्यन्ते च शिखाद्रुमे ।
चक्रवाडः चक्रवालौ समूहे पर्वतान्तरे ॥ ७५ ॥
चीर्णपर्णस्तु खर्जूरे निम्बे चूडामणिध्वनिः (?) ।
काकचिञ्चाफले शीर्षमणिशास्त्रविशेषयोः ॥ ७६ ॥
चन्द्रकान्तो मणौ विन्द्याच्चन्द्रकान्तं तु कैरवे ।
चित्रगुप्तो यमे तस्य लेष(ख)केऽथ चतुष्पथः ॥ ७७ ॥

---

67 — ab) D transp. गोधूमे and गोरक्षे (D गोरिक्षे corrupt).

68 — For 68ab D reads : रक्ते गोकुणिकः पंकमग्नगव्यपिके करे ।

69 — For 69cd BC read : गन्धवलयचलाद्रंगमु (० म)रासु व्यासमातरि ।

71 — ab) D शैलविशेषे for शैले भ्रमरे; — b) C om. भ्रमरे; — d) For d D reads : ग्रहराजो रवौ विधौ ।

73 — c) BC घोष for घोषे; — d) D गणिकायां लतांतरे ।

74 — a) AB °ग्रीव for °ग्रीवे; — b) AD खड्गः for खड्गे; — d) D विशेषे for भेदे; BC विद्भिः (A चापि) for अपि.

द्विजातौ **चत्वरे**ऽपि स्याच्चक्रपादो मतङ्गजे ।
रथे **चर्मण्वती** सिन्धुविशेषे कदलीद्रुमे ॥ ७८ ॥
**चतुष्पद**स्तु रङ्गादौ नारीणां करणान्तरे ।
**चिरञ्जीवी** त्वजे काके **चित्रभानु**र्दिनेश्वरे ॥ ७९ ॥
चित्रके दहने **चक्रधरः** श्रीपतिसर्पयोः ।
**चण्डालिका** तु पार्वत्यां किंद( न )रौषधिभेदयोः ॥ ८० ॥
अथो (?) **चित्ररथो** विद्याधरे गन्धर्वसूर्ययोः ।
**चन्द्रोदयो** निशानाथोदयोल्लोचौषधेषु च ॥ ८१ ॥
**छत्रभङ्ग**स्तु वैधव्ये स्वातन्त्र्ये नृपतिक्षये ।
**छत्रोदयो** महीपानामुदये तालभिद्यपि ॥ ८२ ॥
भवेज्ज**नपदो** लोके विषये पुटभेदने ।
मार्गे **जैवातृक**श्चन्द्रे भैषज्यायुष्मतोः कृशे ॥ ८३ ॥
**जीवितेशो** धवे काले **जलसूचि**र्जलौकसि ।
शृङ्गाटकङ्कयोस्कोटि( ट्यां ? ) पाठीनशिशुमारयोः ॥ ८४ ॥
**जघन्यजो**ऽनुजे शूद्रे **जलरुण्डो** भुजङ्गमे ।
पयोरेणौ जलावर्त्ते तथा कम्बुवराटयोः ॥ ८५ ॥
अथो (?) **जलकरंकः** स्याज्जलवल्लीतडित्त्वतोः ।
नालिकेरफले वृक्षे **जीवपुष्पं** फणिज्जके ॥ ८६ ॥
भूपे दमनके **जीवंजीवो**ऽद्रौ विचकोरयोः ।
**जर्जरीकं** बहुच्छिद्रे **जर्जरीको** जरत्तरे ॥ ८७ ॥
**तर्त्तरीकं** बहित्रे स्यात्तर्त्तरीकस्तु पारगे ।
**तन्दुरीणः** कचे कीटे बर्बरे तन्दुलोदके ॥ ८८ ॥
**दासेरक**स्तु करभे दासीपुत्रे नियामके ।
**देवमणिः** शिवे वाजि गलावर्त्तेऽपि कौस्तुभे ॥ ८९ ॥

---

**82** For 82cd AB read : जुहुराणिध्वनिर्दृष्टोऽध्वर्युज्वलनयोरपि ।

**84** For a C reads : जुहाराणोऽध्वर्युवह्न्योः ।

**85** — o) ABD पद्मरेणौ for पयोरेणौ.

**87** For 87ab D reads : दमनोऽद्रौ महीपाले जगदीश (:) शिवे हरौ । while C reads : महीपाले दमनके जीवते शोभते यमे ।

10

**दन्दशूक**ध्वनिर्दृष्टो दीर्घपृष्ठेऽपि रक्षसि ।
**दुरोदरो** द्यूतकरे पणे द्यूते पिपासके ॥ ९० ॥
**दाक्षायणी** तु पार्वत्यां रोहिण्यामुडुसूच्यते ।
**दिवाभीतो** भवेच्चौरे पेचके कुमुदाकरे ॥ ९१ ॥
**देवसेना** स्मृता शक्रकन्यानिर्जरसेनयोः ।
**दिवाकीर्त्ति**र्ध्वनि(?)र्घूके चण्डाले नापितेऽपि च ॥ ९२ ॥
**देवताडो**ऽनले राहौ कृतान्तेऽथ **दलाढकः** ।
कुन्देऽरण्यतिले दन्तिश्रवणे नागकेसरे ॥ ९३ ॥
शिरीषे गैरिके वृक्षे फेने **दन्तशव**ध्वनिः ।
नागरङ्गेऽपि जम्बीरे कपित्थे **दशनच्छदः** ॥ ९४ ॥
निश्वासे चुम्बने चोष्ठे **द्वैमातुर** इभानने ।
भूपे **दिगम्बरो** रुद्रे क्षपणे ध्वान्तनग्नयोः ॥ ९५ ॥
**धनञ्जयो**ऽनले पार्थे ककुभे देहमारुते ।
नागभेदे गजे क्षत्रे **धृतराष्ट्रो** नृपान्तरे ॥ ९६ ॥
सर्पे खगान्तरे चापि हंसतालविशेषयोः ।
**धुन्धुमार**स्तु भेषज्ये गृहधूमे नृपान्तरे ॥ ९७ ॥
नाशीरे सीकरे मेघोपले **धाराधरो** घने ।
कृपाणे तुरगे **धूलीकदम्बो** नीपसङ्कयोः ॥ ९८ ॥
वर(रु)णे तिनिशे **धूमकेतु**रुत्पातबर्हिषोः ।
**धराधरो** हरौ शेषे पर्वतेऽथ धुरन्धरः ॥ ९९ ॥

---

92 — a) D पुनः for स्मृता.

93 — b) ABC अद्रौ for अथ; — cd) ABC वृक्षे खातके for दंतिश्रवणे.

94 For ab BC read: वात्यौषध्योर्दंतशवध्वनिः.

95 — a) D दृष्ट for ओष्ठे; — b) For b D reads नुष्ट दंडधरो यमे।. — d) D तमसीस्पते for ध्वांतनग्नयोः.

96 — c) D ताल° for नाग°; — d) AC om. d.

97 — AC om. 97ab. — cd) For cd AD reads: धुंधुमारः (D °रेः) नृपे शक्रे (D °क्रं) गोपे धारांकुरध्वनिः।

98 — a) A सीरके (?) for सीकरे.

99 — a) D वरुणद्रुफले for वरुणे तिनिशे; — c) A धाराधरो (D धीरधरो) for धराधरो.

धुर्ये वनद्रुमे **धर्मराजः** सूर्ये युधिष्ठिरे ।
बुद्धे दण्डधरे **धार्त्तराष्ट्रः** कौरवसर्पयोः ॥ १०० ॥
**निश्चारको**ऽनिले स्वैरे पुरीषस्य क्षये स्मृतः ।
**निर्ग्रन्थकः** कलाहीने क्षपणेऽपि परिच्छदे ॥ १०१ ॥
**नागवारिक**शब्दोऽयं राजकुञ्जरहस्तिपे ।
गणस्थराजे गरुडे दृश्यते चित्रमेखले ॥ १०२ ॥
**नारायणो**ऽच्युते तालभेदे **नारायणी** पुनः ।
शतावर्युमयोर्लक्ष्म्यां **नदीकान्तो**ऽपि हिज्जले ॥ १०३ ॥
सिन्दुवारे समुद्रे स्याद्वृक्षतालविशेषयोः ।
**नदीकान्ता** महीजम्बूकाकजङ्घालतास्वपि ॥ १०४ ॥
अथ **निःसरणं** मोक्षे निर्याणे मरणेऽपि च ।
उपाये तालभेदेऽथ **निर्भर्त्सन**मलक्तके ॥ १०५ ॥
खलीकारे **निशाचारी** शिवासत्यो**र्निशाचरः** ।
जम्बुके कौशिके चौरे दन्दशूकेऽपि रक्षसि ॥ १०६ ॥
**नन्द्यावर्त्तं** पुनर्वेश्मविशेषे नगरद्रुमे ।
**नियामकः** कर्णधारे पोतवाहे नियन्तरि ॥ १०७ ॥
**नक्षत्रनेमी** रेवत्यां चन्द्रे **निरसन**ध्वनिः ।
निषूदने तथा निष्ठीवने **निस्तरणं** पुनः ॥ १०८ ॥
निस्तारे तरणे दृष्टमुपायेऽथ **निरूपणं** ।
विलोकने विचारे स्यान्निदेशेऽपि निदर्शने ॥ १०९ ॥
**निराकृति**र्निराकारे वेदहीननिषेधयोः ।
दृष्टं **निशमनं** धीरैः श्रवणेऽपि निरीक्षणे ॥ ११० ॥
**नीलकण्ठः** पीतसारे महादेवमयूरयोः ।
**नारकीटो**ऽश्मनः कीटे मित्रद्रोहे विशारदे ॥ १११ ॥

---

100 — c) D शुद्धे for बुद्धे.

After v. 102 C adds : नागदंतो द्विपरदे गृहांतर्भूतदारुणि । नागदंती श्रीहस्तिन्यां कुंभाख्यभेषजेऽपि च ।

104 — a) C om. सिंदुवारे; — For 104ab AB read : सिंदुवारेऽर्णवे निस्तुषितं त्यक्ते लघूकृते ।

110 — b) AB वेदहीन (B °ने) for प्रत्यादेश; C om. प्रत्यादेश.

111 — D om. v. 111.

**नन्दिघोषः** पार्थरथे बन्दिघोषे **निषङ्गरः** ।
जम्बाले मन्मथे **नीलाम्बरो** हलिनि राक्षसे ॥ ११२ ॥
**परिवापो** जलस्थाने पर्युप्तौ च परिच्छदे ।
वपने **परिवारो**ऽसिकोशे परिजने स्मृतः ॥ ११३ ॥
**परिग्रहः** स्यात्स्वीकारे शापे पत्न्यां परिच्छदे ।
**परिबर्हः** परीवारे भूपालोचितवस्तुनि ॥ ११४ ॥
अथ **पुष्पलकः** कीले गन्धैणे क्षपणेऽपि च ।
**पूतिकाष्ठं** च सरले देवदारुमहीरुहे ॥ ११५ ॥
**पारीरणो** भवेद्दण्डे कच्छपे पटशाटके ।
**परवाणि**र्बुधे दृष्टो धर्माध्यक्षेऽपि वत्सरे ॥ ११६ ॥
**पुण्डरीकं** सितच्छत्रे भेषजे च सितोत्पले ।
**पुण्डरीक**स्तु दिङ्नागे राजिलाहौ कमण्डलौ ॥ ११७ ॥
व्याघ्रे गणधरे दन्तिज्वरे यागे मृगाधिपे ।
कोशकारविशेषे स्यात्सितवर्णाम्रवृक्षयोः ॥ ११८ ॥ युग्मं ॥
**प्रतिशिष्टः** प्रतिक्षिप्ते प्रेषितेऽपि निराकृतौ ।
**पुरस्कृतो**ऽभिशस्ते पूजिते चाग्रगामिनि ॥ ११९ ॥
**पितामहः** सुरज्येष्ठे पितुस्ताते **प्रतिश्रयः** ।
समित्याश्रययोर्गेहे **प्रतियत्न** उपग्रहे ॥ १२० ॥
संस्कारलिप्सयोः ख्यातो विज्ञैः **प्रतिभय**ध्वनिः ।
अनुग्रहे वीरवरे साध्वसे भयकारिणि ॥ १२१ ॥
**पारायणं** समासङ्गे कार्त्स्न्ये पारगतावपि ।
**परायण**मसंगोक्तावाश्रयेऽथ **परायणः** ॥ १२२ ॥

---

**112** — a) D रथे for पार्थ°; — b) D पार्थानिषङ्गरः for निषङ्गरः.
**113** — b) C om. 113b–d.
**114** — C om. 114ab; for 114cd cf. *Haimakośa* 4. 342ab.
**116** — c) BC पर्याये परवाणिस्तु ।
**119** — c) D पुरस्कृतधृतिर्दृष्टः ।
**121** — b) D बुधैः for विज्ञैः.
**122** — 122ab = *Medinī*, p. 69 v. 103ab.

तत्परे स्यात्पल्लवितं लाक्षारागे सपल्लवे ।
ततं प्रहसनं हासेऽप्याक्षेपे रूपकान्तरे ॥ १२३ ॥
पाञ्चजन्यः पोटगले शङ्खे लक्ष्मीपतेरपि ।
परिधायो जलस्थाने नितम्बपरिवारयोः ॥ १२४ ॥
पात्रटीरस्त्वयःकांस्ये जरत्पात्रे हुताशने ।
पिङ्गाणके तथा वृक्षे तोयमन्त्रविशेषयोः ॥ १२५ ॥
पद्मलाञ्छनशब्दोऽजे कुबेरे केशवे रवौ ।
प्रचलाकः शराघाते शिखण्डेऽपि भुजङ्गमे ॥ १२६ ॥
भेके पिप्पलकं सूत्रे सीवने चूचुकेऽपि च ।
पञ्चनखो गजे कूर्मे परपुष्टा पणस्त्रियाम् ॥ १२७ ॥
परपुष्टः पिके पर्वरीणं तु घृतकम्बले ।
पर्णवृन्तरसे पर्णसिरायां पर्वणीष्यते ॥ १२८ ॥
पीलुपर्ण्योषधीभेदे बिम्बिकामूर्वयोरपि ।
प्रजापतिर्नृपे सूर्ये पावके त्वष्टृवेधसोः ॥ १२९ ॥
जामातर्यपि दक्षादौ पञ्चगुप्तस्तु कच्छपे ।
चार्वाकदर्शने चाथ पारिजातः सुरद्रुमे ॥ १३० ॥
पारिभद्रोऽपि मन्दारे परिवर्त्तः पलायने ।
युगान्ते भ्रमणे कूर्मराजे विनिमयेऽपि च ॥ १३१ ॥
पुष्पदन्तो जिने रुद्रगणे दिक्कुञ्जरान्तरे ।
पुटभेदो नदीवक्रे पत्तनातोद्ययोरपि ॥ १३२ ॥
पिण्डीतको मरुवके तगरे मदनद्रुमे ।
अथ पुष्करिणी नद्यां पद्मिनी दन्तियोषयोः ॥ १३३ ॥

---

123 — For ab D reads : तत्परे शत्रुसैन्ये च पुरुहूतः पुरंदरे । — c) D वृके for तते.

124 — a) D तु पाठीने for पोटगले ; — b) C मीने पोटगलेऽपि च.

125 — d) D व्यापारमंत्रिणि for मंत्रिविशेषयोः.

126 — a) D अयं for अजे ; — c) AC प्रवालक (?) for प्रचलाकः.

130 — b) C °गुप्तिः for गुप्तः.

133 — b) D पि निगद्यते for मदनद्रुमे ; — b) CD मुनौ for अथ ; — d) B दंतयोरपि for दंतियोषयोः.

खाते **पुण्यजनः** श्रीदे सज्जनेऽपि **प्रकीर्णकः** ।
विस्तारे चामरे ग्रन्थविशेषेऽपि तुरङ्गमे ॥ १३४ ॥
**पृष्ठशृङ्गी** पुनः षण्ढे सैरिभेऽपि वृकोदरे ।
**पिण्डपुष्पं** जपाशोकाब्जेषु **पोटगलो** झषे ॥ १३५ ॥
नले काशे **पुरोडाशे(शो)** हुतशेषे हविष्यपि ।
सोमे **पारशवः** शूद्रातनये ब्राह्मणादपि ॥ १३६ ॥
लोहे **पयोधरो** नालिकेरे मेघे कशेरुके ।
कुचेऽपि **परीघातस्तु** प्रहारास्त्रविशेषयोः ॥ १३७ ॥
**प्लवङ्गमः** कपौ भेके रविसूते **पराक्रमः** ।
प्राणमात्रे (?) समुद्योगे **पीठमर्दो** विनिर्गते ॥ १३८ ॥
नाट्योक्तौ नाटकासक्ते खेचरे **प्रविदारणं** ।
संग्रामे दारणे **पारापतः** कालरवे गिरौ ॥ १३९ ॥
**फर्फरीकश्च**पेटेऽपि **फर्फरीकं** तु मार्दवे ।
**फलोदयः** सुरागारे वृद्धौ निर्वाणलाभयोः ॥ १४० ॥
**भागधेयं** करे भाग्ये **भागधेयस्तु** गोत्रजे ।
भवे**द्भोगवती** सर्पनगरीतटिनीभिदोः ॥ १४१ ॥
**भयानकध्व**निर्व्याघ्रे रसभेदे विधुंतुदे ।
भीमे **भ्रमरको** भृङ्गे गिरिके चूर्णकुन्तले ॥ १४२ ॥
**भट्टारको** नृपे देवे मुनौ **भार्याटिको** मृगे ।
भार्यया तेजिते चाथ **भरद्वाजः** खगान्तरे ॥ १४३ ॥
बृहस्पतिसुते **भारद्वाजी** वनपिचुद्रुमे ।
**भारद्वाजो** मुनौ द्रोणे **भृङ्गराजः** खगान्तरे ॥ १४४ ॥

---

**134** — a) CD अथ for खाते. — c) CD ग्रंथे for ग्रंथ°; — c) AB खंडे for षंडे.

**136** — a) D सांद्रे केशे for नले काशे; — c) D शूद्री° for शूद्रा°.

**137** — a) C श्वपे (?) (D कारौ ?) for अपि.

**138** — a) D प्लुतौ for कपौ; — b) B सूर्य° for रवि°; — c) D द्रोणमात्रे (?) for प्राणमात्रे.

**141** — c) AB भागे भागवती.

**143** — b) BD °टको for °टिको.

मार्कवे **भस्मतूलं** तु पांसुवृष्टौ हिमेऽपि च ।
**भद्रकाली** तु गन्धोलीपार्वत्योरोषधीभिदि ॥ १४५ ॥
अथो (?) **माणवको** हारविशेषे बटुके शिशौ ।
**मूर्द्धाभिसिक्तो** भूपाले क्षत्रिये सचिवे क्वचित् ॥ १४६ ॥
**महीवीरो** जिने सिंहे तार्क्ष्ये शूरे पिके पवौ ।
मखवह्नौ **महासेनो** महासैन्याधिपे गुहे ॥ १४७ ॥
**महाकालो** महादेवे किंपाके प्रमथान्तरे ।
व्यालान्तरे **महामात्रो** हस्त्यारोहेऽधिपाढ्ययोः ॥ १४८ ॥
**मृष्टेरुको** वदान्ये स्यान्मिष्टाशिन्यतिथिद्विषि ।
अथो **मरुबकः** पुष्पे मदनद्रौ फणिज्जके ॥ १४९ ॥
**महाशङ्खो** निधौ संख्याविशेषे मनुजास्थिनि ।
**मल्लनागस्तु** चाणक्ये त्रिदशेभे **मलिम्लुचः** ॥ १५० ॥
तस्करे मारुते दुष्टे **मीनघ्रीणस्तु** खञ्जने ।
दर्दुराभ्रे **मेघनादो** वरुणे रावणात्मजे ॥ १५१ ॥
स्तनितेऽथ **महानादो** वर्षुकाब्दे शयानके ।
सुस्वने **मुचकुन्दः** स्यात् मुनौ दैत्यद्रुभेदयोः ॥ १५२ ॥
**मालुधानो** मातुलाहौ **मालुधानी** लतान्तरे ।
**मातुलानी** कलापे स्याच्छणमातुलभार्ययोः ॥ १५३ ॥
**महोदयो** नृपे मोक्षे मधुपर्के पुरे रवौ ।
**मार्जालीयस्तु** मार्जारे शूद्रे विग्रहशोधने ॥ १५४ ॥
**महालयो** बृहत्तीर्थे परमात्ममहेशयोः ।
**महारजतं** कुसुम्भे सुवर्णे **मधुसूदनः** ॥ १५५ ॥
नटे मधुकरे विष्णावथ **मातुलपुत्रकः** ।
धत्तूरस्य फले चापि मातुलस्य च नन्दने ॥ १५६ ॥

---

146 — d) ABD om. क्षत्रिये.
149 — ab) For 149ab cf. *Medinī* p. 22, 209cd.
151 — c) D दर्दुरे for दर्दुराभ्रे.
152 — d) BC दैत्ये द्रुमे नृपे.
153 — For ab cf. *Medinī* p. 130 v. 203cd.
154 — b) C पुरु for पुरे.
155 — a) A महत् for बृहत्.

**मेघपुष्पं** तु नादेये सलिलौषधिभेदयोः ।
**महानीलो** भृङ्गराजे मणिभिन्निधिभेदयोः ॥ १५७ ॥
**यादसांपति**रम्भोधौ प्रतीचीदिक्पतावपि ।
**योजनगन्धा** कस्तूर्यां वैदेह्यां व्यासमातरि ॥ १५८ ॥
**राजराजो** निशानाथे सार्वभौमकुबेरयोः ।
**रङ्गमाता** तु कुट्टिन्यां तथा भूमिरुहामये ॥ १५९ ॥
**रौहिणेयो** बुधे वत्से तालाङ्के पर्वतान्तरे ।
**राजादनः** पियालुद्रौ क्षीरिकायां त्रिपत्रके ॥ १६० ॥
**रन्तार्द्धिकं** दिने दृष्टं सुखस्थानेष्टमङ्गले ।
**राधरङ्क(ङ्कु)**स्तु नाशीरे शीकरे जलदोपले ॥ १६१ ॥
**रेरिहाणो**ऽम्बरे रुद्रे **रागचूर्ण**स्तु मन्मथे ।
खदिरे **रक्तरेणुः** स्यात्पलाशे कलिकोद्गमे ॥ १६२ ॥
सिन्दूरे **रतनारीचः** सीत्कृते कुकुरे स्मरे ।
**रोहिताश्वो** हरिश्चन्द्रनृपजे जातवेदसि ॥ १६३ ॥
**लक्ष्मीपतिः** लवङ्गद्रौ पूगे कृष्णे रवौ नृपे ।
**लालाटिकः** प्रभोर्भालदर्शिन्याश्लेषभिद्यपि ॥ १६४ ॥
मन्दे **विरोचनो** वह्नौ चन्द्रे प्रह्लादनन्दने ।
**बहुरूपो** हरौ रुद्रे धूणके सरटे स्मरे ॥ १६५ ॥
**वृन्दारकः** सुरे वृक्षे मनोज्ञश्रेष्ठयोरपि ।
**वराटकः** स्थूलरज्जौ पद्मबीजकपर्दयोः ॥ १६६ ॥
**वारबाण**स्तु कूर्पासे कवचे वरचन्दनं ।
कालीये देवदारुद्रौ **ब्रह्मबन्धु**र्द्विजाधमे ॥ १६७ ॥

---

157 — For 157 CD read: भवेन्मंडलकं कुष्टभेदे बिंबे च दर्पणे । मेघवाहनमिच्छंति वह्निभूरुहभेदयोः ॥

160 — b) D दृश्यते for तालांके; for cd D reads:—रोहिणीरमणश्चंद्रे वृषभे हिमवालुके ।

161 — For 161cd cf. *Haimakośa* 4. 29ab; — d) AD वारिदाश्मनि for जलदोपले.

166 — a) CD वृंदारकं for वृंदारकः; — c) BCD °गुणे for °रज्जौ.

विप्रस्य बान्धवो (वे) **वातरूषो**ऽलं (?) चेन्द्रचापयोः ।
**विश्वकर्मा** मुनौ भानौ त्रिदशानां च शिल्पिनि ॥ १६८ ॥
**वितुन्नकं** तु धन्याके जने झाटामलौषधे ।
**विनायको** गुरौ तार्क्ष्ये हेरम्बे बुद्धविघ्नयोः ॥ १६९ ॥
**वृषाकपायी** श्रीस्वाहाशतावर्यद्रिजासु च ।
**बलाहको**ऽम्बुदे शैले दैत्ये नागे हयान्तरे ॥ १७० ॥
**वृषाकपि**र्हरे विष्णौ शक्रे सूर्ये हुताशने ।
**विशारदः** पुनः प्राज्ञे चतुरेऽथ **विदूषकः** ॥ १७१ ॥
निन्दकेऽपि विलक्षे स्याद्धूर्ते **वैनाशिकः** पुनः ।
ऊर्णनाभक्षणिकयोर्निघ्ने **वैतरिणी** पुनः ॥ १७२ ॥
रक्षो मातरि वाहिन्यां **वर्कराटो** नखव्रणे ।
कटाक्षे भास्वतः प्रातरुस्रे **वातखुडा**ध्वनिः ॥ १७३ ॥
वामायां पिच्छलस्फोटे वात्यामारुतरक्तयोः ।
**वानप्रस्थो** मधूकद्रौ आश्रमे किंशुकेऽपि ॥ १७४ ॥
**वर्धमानः** शरावे स्यादेरण्डप्रश्नभेदयोः ।
विष्णौ वीरजने **विष्णुपदा**ख्या पद्मरवाब्धिषु ॥ १७५ ॥
अथ **विष्णुपदी** गङ्गासंक्रान्तिद्वारकासु च ।
**वर्त्तरूको** नदीभेदे काकनीले जलावटे ॥ १७६ ॥
**विहेटनं** तु हिंसायां मर्द्दनेऽपि विडम्बने ।
**विष्वक्सेना** फलिन्यां स्याद्विष्वक्सेनस्तु केशवे ॥ १७७ ॥
**वृहन्नलः** पोटगले पार्थे **विचकिलः** पुनः ।
मल्यां दमनके **वातरायणः** क्रकचे शरे ॥ १७८ ॥

---

168 — For 168ab D reads: विप्रबंधा विधिक्षेपे ब्रह्मबंधूर्वरस्त्रियाम् ।
169 — For 169ab A reads: वैदेहकध्वनिर्वैश्यापुत्रे शूद्राच्च वाणिजे ॥
170 — a) D दुर्गा (C स्वहा) for स्वाहा; — b) D °अमृताब्धिषु for °अद्रिजासु च.
171 — a) C हरिः for हरे; — b) D वारपारो नदेम्बुधो (धौ); — c) AB बके (?) for पुनः.
172 — b) A वैनाशिकः क्षणिके स्मृतः; — c) A परायत्ते for क्षणिकयोः; — d) तथा for निघ्ने.
176 — a) AD तथा for अथ.
178 — a) D महामत्स्ये for पोटगले; — d) C शुकवें (?) for क्रकचे.

शरसंक्रमणे ताले वातूले वरवर्णिनि ।
हरिद्रारोचनानारीलाक्षाराकाप्रियङ्गुषु ॥ १७९ ॥
**वैजयन्तो** गृहे शक्रप्रासादध्वजयोरपि ।
**वैजयन्ती** पताकायां व्यवहारः स्थितौ पणे ॥ १८० ॥
**शालावृकः** कपौ सारमेयजम्बुकयोरपि ।
**शिलाटक**स्तिले चाट्टे **शतानीको** नृपे मुनौ ॥ १८१ ॥
**शशिलेखा** चन्द्रलेखावाकुच्यो (:) वृत्तभिद्यपि ।
अथो (?) **शिखरिणी** वृत्तरोमालीमल्लिकासु च ॥ १८२ ॥
पेयभिद्यबलारले **शुभ्रधामा** सुधाकरे ।
घनसारे चाब्धिफेने **शातकुम्भो**ऽश्वमारके ॥ १८३ ॥
**शातकुम्भं** सुवर्णे स्याच्छीतभानुर्निशाकरे ।
चन्द्रे **शिलीमुखो** बाणे भ्रमरे मक्षिकान्तरे ॥ १८४ ॥
**शृङ्गाटकं** पथां श्लेषे तथा पानीयकण्टके ।
**शिपिविष्ट**स्तु खल्वाटे दुश्चर्मणि च शङ्करे ॥ १८५ ॥
**शरवाणिः** पादचारे शरास्ये शरजीविनि ।
**शतपत्रं** शुकाम्भोजदार्वाघाटेषु केकिनि ॥ १८६ ॥
**शृगालिका** शिवायां स्याद्भयादपि पलायिते ।
**शालंकायन** ईशानप्रतीहारे मुनावपि ॥ १८७ ॥
**सरस्वती** नदीभेदे श्रुतदेव्यां सरित्सु च ।
वसुधावरवर्णिन्योर्धेनुवाणीरमास्वपि ॥ १८८ ॥
**सर्वतोमुख**माकाशे सलिले **सर्वतोमुखः** ।
विधिक्षेत्रज्ञरुद्रेषु दृश्यते कीटकान्तरे ॥ १८९ ॥

---

179 — c) B लाक्षा for नारी; — d) B वामनेत्रा° for लाक्षाराका°.

180 — CD om. v. 180.

182 — a) BC °चंद्ररेखा for °लेखा; — d) D वृत्तभेदयोः for मल्लिकासु च.

183 — b) B श्वेत° for शुभ्र°; — c) AD अब्धिफेने तथाशेषे.

184 — b) BC अष्ट श्रुतिकरोऽयसि; — c) BC सर्पे for चंद्रे; — d) CD मक्षिकाभिदि for मक्षिकांतरे.

185 — For 185ab cf. *Haimakośa* 4. 38ab.

187 — For 187cd D reads:—शिषिवाहन इत्येष मेषेऽपि शरजन्मनि ।

**संप्रयोगं** रते दृष्टं मन्विते कार्मणे बुधैः ।
**समीरणो** मरुबके पवने पथिकेऽपि च ॥ १९० ॥
**सार्वभौमः** पुरे काष्ठागजे सकलभूभुजि ।
**समुदायो** रणे वृन्दे **सामिधेनी** समीद्दचोः ॥ १९१ ॥
**सम्परायो** मुखे चापि संग्रामोत्तरकालयोः ।
**स्तनयित्नु**र्गदे धूमयोनौ मृत्यौ च गर्जिते ॥ १९२ ॥
**सुयाम(मु)नो** हरौ दुर्गे वत्सराजप्रसादयोः ।
**सोमवल्कः** पुनः शुक्लखदिरे कट्फलौषधे ॥ १९३ ॥
अथ **संसरणं** ख्यातमसम्बाधे चमूगतौ ।
संसारे संयुगारम्भे नगरस्योपनिर्गमे ॥ १९४ ॥
**समुद्रारु**र्झषे सेतुबन्धग्राहविशेषयोः ।
**सालमार**ध्वनिर्वृक्षविशेषे हिङ्गुभिद्यपि ॥ १९५ ॥
**सूत्रकण्ठः** शुके विप्रे खञ्जरीटकपोतयोः ।
अथ **सारसनं** नीव्यां कञ्चुके स्यादुरच्छदे ॥ १९६ ॥
**सामयोनि**र्द्विपे दृष्टः सामजे परमेष्ठिनि ।
**सदादान**स्तु हेरम्बे गन्धद्विपसुरेभयोः ॥ १९७ ॥
**सनातनः** शिवे शम्भुविश्वेदेवाच्युतेषु च ।
शाश्वते **सुप्रतीक**स्तु शोभनाङ्गे च दिग्गजे ॥ १९८ ॥
**समुत्थानं** निदाने स्यादुद्यमोत्थानयोरपि ।
**समापन्नं** तु संप्राप्ते समाप्तौ नाशखेदयोः ॥ १९९ ॥
अथ **संयमनं** बन्धे व्रते **संयमिनी** पुरि ।
**सौदामिनी** तडिद्भेदेऽप्सरोभेदे तडित्यपि ॥ २०० ॥

---

191 — b) C °द्विपदे for °गजे; C भूभुजे for भूभुजि; — cd) C om. 191cd.
193 — c) A स्मृतः for पुनः; — d) BC कज्जलौ° for कट्फलौ°.
195 — b) CD °ग्रह° for °ग्राह°;
196 — c) D दृष्टं for नीव्यां.
198 — c) D तरुणौ for शाश्वते.
200 — a) C बाध for बंधे.

उक्तं **संवदनं** वादे समालोचे वशीकृतौ ।
**स्थिरदंष्ट्रः** स्मृतः सर्पे शूकरेऽथ **सदाफलः** ॥ २०१ ॥
नालिकेरीफले यज्ञद्रुमे स्कन्धफलेऽपि च ।
**समाहार**स्तु संक्षेपेऽप्येकत्रकरणे स्मृतः ॥ २०२ ॥
**हरिचन्दन**शब्दोऽयं कुङ्कुमे देवभूरुहे ।
**हैमवत्य**भयास्वर्णक्षीरीदुर्गावचासु च ॥ २०३ ॥
**हस्तिमल्लः** सुनासीर(रे) द्विरदे गणनायके ।
भद्रेऽपि **हिमनाथ**स्तु चन्द्रे चन्द्रे हिमाचले ॥ २०४ ॥
**हस्तिकर्णः** पलाशद्राविरण्डगणभेदयोः ।
**हेमपुष्प**मशोकद्रौ जपापुष्पेऽपि चम्पके ॥ २०५ ॥
**हेमपुष्पक** इत्येष चम्पके **हेमपुष्पिका** ।
यूथ्यां च **हिङ्गुनिर्यासो** निम्बे हिङ्गुरसे स्मृतः ॥ २०६ ॥
**हरिताली** नभोरेखादूर्वासिलतिकासु च ।
**हर्षयितुः** सुते स्वर्णे तालभेदमयूरयोः ॥ २०७ ॥
**हलाहलो** विषे पल्लीभुजङ्गमविशेषयोः ।
**हिरण्यरेता** ज्वलने चित्रके दिवसेश्वरे ॥ २०८ ॥
**हारिकण्ठः** पिके दृष्टो हारान्वितगले शुके ।
**हरिवाहन** इत्येष पाकशासनसूर्ययोः ॥ २०९ ॥
**क्षीराब्धिजो** निशानाथे **क्षीराब्धिजा** श्रियामपि ।
**क्षीराब्धिजं** तु मुक्तायां समुद्रलवणेऽपि च ॥ २१० ॥
**क्षुरमर्दक** इत्येष नापिते पक्षिभिद्यपि ।
अथ **क्षीराब्धिजापुत्रः** स्मरेऽश्वे भद्रकुञ्जरे ॥ २११ ॥

---

201 — a) C सवेदनं for संवदनं; — c) D पुनः for स्मृतः.
202 — d) Dसंसारे संहृतावपि.
203 — b) B °पादपे for °भूरुहे; — c) C °वर्ण for °स्वर्ण.
204 — AB om. 204cd.
205 — B om. 205cd.
206 — c) D माल्यां for यूथ्यां.
208 — a) D ह्यलालो for हलाहलो; D वृक्ष° for पल्ली°.
209 — AB om. 209cd.

पाणिन्यहीन्द्रगुरुभागुरिभोजभेड-
हेमामरादिसमुदीरितशास्त्रसारात् ।
**नानार्थरत्नतिलकं** स च सिद्धशब्द-
रत्नाकरः (रं) समतनोत्सुमतिर्महीपः ॥ २१२ ॥

श्रीमान्सोमभवः सलक्षसचिवो वाक्कण्ठभूषाङ्कभृत्
संप्रासूत सुतं महीपममलं सौभाग्यदेवी च यं ।
संकीर्णाख्य इहोज्ज्वलः समुचिते विद्वद्गिरां पूर्णतां
ग्रन्थे तद्रचितेऽसमे यमभजत् काण्डश्चतुर्थः परम् ॥ २१३ ॥

**इत्यनेकार्थतिलके चतुर्थः काण्डः समाप्तः ॥**

---

213 — b) BCD om. महीप; — c) D संकीर्णाक्षरसंज्ञकः; B प्रज्ञावतां for विद्वद्गिरां; — d) CD अधुना for असमे; D पंचाग्रजः for चतुर्थः परं.

Colophon—B इति श्रीमहीपकृतौ महीपकोषाभिधस्य शब्दरत्नाकरस्य नानार्थतिलके चतुर्थः काण्डः ॥ छ ॥श्री ॥ शुभं भवतु ।

# Index of words

### from

## The Anekārthatilaka

[ *N. B.* words printed in bold type are homonymous ]


| Word | Kāṇḍa | Stanza |
|---|---|---|
| अं | 1 | 9 |
| अंश | 2 | 251 |
| अंश | 2 | 65 |
| ,, | ,, | 124 |
| ,, | 3 | 169 |
| **अंशु** | 2 | 5 |
| अंशु | 2 | 107 |
| ,, | ,, | 210 |
| ,, | 3 | 129 |
| ,, | 4 | 27 |
| अंस | 3 | 86 |
| **अंह्रि** | 3 | 13 |
| अंह्रि | 3 | 104 |
| **अ** | 1 | 5 |
| ,, | ,, | 9 |
| **अक** | 2 | 6 |
| अकारण | 2 | 216 |
| अकार्य | 3 | 235 |
| अकुप्य | 3 | 283 |
| अकुशल | 3 | 67 |
| **अक्ष** | 2 | 3 |
| ,, | ,, | 4 |
| अक्षर | 2 | 267 |
| **अक्षर** | 3 | 7 |
| अक्षि | 1 | 14 |
| ,, | 2 | 121 |
| ,, | ,, | 168 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अक्षेम | 3 | 11 |
| अखल | 3 | 58 |
| **अग** | 2 | 8 |
| अग | 2 | 203 |
| अगति | 2 | 253 |
| ,, | ,, | 281 |
| अगस्त्य | 3 | 45 |
| अगुण | 1 | 21 |
| अगुरु | 2 | 263 |
| अग्नि | 2 | 293 |
| अग्नितेजस् | 2 | 60 |
| अग्निमुख | 4 | 14 |
| **अग्निशिखा** | 4 | 14 |
| **अग्र** | 2 | 10 |
| अग्र | 2 | 77 |
| ,, | ,, | 227 |
| अग्रगामिन् | 4 | 119 |
| अग्रज | 2 | 118 |
| ,, | 4 | 12 |
| **अग्रजन्मा** | 4 | 12 |
| अघ | 2 | 6 |
| ,, | ,, | 26 |
| **अघ** | 2 | 8 |
| अघूक | 3 | 189 |
| **अङ्क** | 2 | 6 |
| अङ्क | 2 | 176 |
| ,, | 3 | 55 |
| **अङ्कपाली** | 4 | 8 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अङ्कुर | 2 | 327 |
| **अङ्कुर** | 3 | 10 |
| अङ्कूर | 2 | 153 |
| ,, | ,, | 177 |
| ,, | ,, | 240 |
| ,, | 3 | 51 |
| अङ्कूरकारण | 2 | 282 |
| **अङ्क** | 2 | 20 |
| अङ्ग | 2 | 104 |
| ,, | ,, | 198 |
| ,, | 3 | 48 |
| ,, | ,, | 146 |
| ,, | ,, | 201 |
| **अङ्गज** | 3 | 12 |
| अङ्गराग | 2 | 268 |
| **अङ्गारक** | 4 | 6 |
| **अङ्गारका** | 4 | 6 |
| अङ्गारपात्र | 3 | 299 |
| **अङ्गारिणी** | 4 | 7 |
| अङ्गीकार | 3 | 272 |
| अङ्गुलिमुद्रा | 2 | 300 |
| अङ्गुष्ठ | 4 | 45 |
| अङ्गुष्ठरेखामध्य | 2 | 240 |
| अच्युत | 2 | 229 |
| ,, | 4 | 103 |
| ,, | ,, | 198 |
| **अज** | 2 | 7 |
| अज | 2 | 238 |
| ,, | 3 | 84 |
| ,, | 4 | 79 |
| ,, | ,, | 126 |
| अजन्य | 2 | 30 |
| अजमोदक | 3 | 139 |
| अजाकण्ठस्तन | 2 | 235 |
| अजिन | 2 | 11 |
| **अजिर** | 3 | 9 |
| अज्ञ | 3 | 161 |
| अञ्चल | 3 | 175 |
| **अञ्जन** | 3 | 12 |
| अञ्जन | 3 | 61 |
| ,, | ,, | 278 |
| **अञ्जना** | 3 | 13 |
| अटनि | 2 | 13 |
| अटनी | 2 | 77 |
| **अट्ट** | 2 | 16 |
| **अणु** | 2 | 13 |
| **अण्ड** | 2 | 16 |
| अण्ड | 2 | 223 |
| अण्डज | 2 | 151 |
| अतसी | 2 | 32 |
| **अति** | 2 | 19 |
| अतिकोपन | 2 | 108 |
| अतिक्रम | 3 | 10 |
| अतिथि | 3 | 85 |
| अतिथिद्विट् | 4 | 149 |
| **अतिमुक्त** | 4 | 10 |
| अतियुवन् | 3 | 36 |
| अतिविषा | 3 | 18 |
| अतिवृद्धि | 4 | 19 |
| अतिशय | 2 | 62 |
| ,, | ,, | 122 |
| ,, | 3 | 232 |
| **अत्यय** | 3 | 9 |
| अत्र | 2 | 7 |
| अथर्वज्ञवाडव | 4 | 21 |
| **अद्द** | 2 | 7 |
| अदन | 3 | 105 |
| अदिति | 4 | 45 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अदूर | 4 | 56 |
| अद्भुत | 2 | 110 |
| अद्य | 1 | 24 |
| ,, | 2 | 13 |
| ,, | ,, | 144 |
| ,, | ,, | 187 |
| ,, | 3 | 37 |
| ,, | ,, | 254 |
| ,, | 4 | 87 |
| अद्रि | 2 | 15 |
| अद्रिजा | 4 | 170 |
| अद्रिजापति | 1 | 9 |
| अधम | 2 | 5 |
| ,, | ,, | 63 |
| ,, | ,, | 85 |
| ,, | 3 | 152 |
| अधस् | 2 | 128 |
| अधि | 2 | 18 |
| अधिक | 2 | 10 |
| ,, | ,, | 18 |
| ,, | 4 | 7 |
| अधिप | 3 | 99 |
| ,, | 4 | 148 |
| अधिवास | 4 | 12 |
| अधिष्ठान | 4 | 15 |
| अध्याय | 3 | 185 |
| अध्यारूढ | 4 | 6 |
| अध्यासन | 4 | 16 |
| अध्वग | 2 | 14 |
| अध्वन् | 2 | 7 |
| ,, | ,, | 223 |
| ,, | ,, | 287 |
| अध्वर | 2 | 157 |
| ,, | 3 | 7 |
| अनघ | 2 | 314 |
| अनन्त | 1 | 9 |
| ,, | 2 | 310 |
| अनन्त | 3 | 6 |
| अनन्तर | 2 | 16 |
| अनन्ता | 3 | 6 |
| अनन्य | 3 | 16 |
| अनर्थ | 2 | 25 |
| अनर्थकर | 4 | 59 |
| अनल | 2 | 38 |
| ,, | 3 | 110 |
| ,, | 4 | 93 |
| ,, | ,, | 96 |
| अनलत्रय | 2 | 141 |
| अनलोत्पात | 4 | 33 |
| अनशन | 2 | 194 |
| अनादर | 2 | 64 |
| ,, | 4 | 9 |
| अनामिकाङ्गुष्ठमान | 3 | 101 |
| अनिल | 2 | 22 |
| ,, | ,, | 191 |
| ,, | ,, | 344 |
| ,, | 3 | 9 |
| ,, | ,, | 107 |
| ,, | 4 | 67 |
| ,, | ,, | 101 |
| अनु | 2 | 16 |
| अनुकम्पा | 2 | 354 |
| अनुक्रोश | 2 | 302 |
| अनुगम | 3 | 267 |
| अनुग्रह | 4 | 121 |
| अनुज | 2 | 326 |
| ,, | 3 | 36 |
| ,, | 4 | 85 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अनुज्ञा | 2 | 175 |
| ,, | 4 | 14 |
| अनुपहत | 2 | 306 |
| अनुमति | 2 | 334 |
| अनुमति | 4 | 14 |
| अनुमान | 2 | 265 |
| अनुराग | 2 | 250 |
| अनुशय | 1 | 28 |
| अनूक | 3 | 2 |
| अनूचान | 4 | 16 |
| अनूपप्राय(?) | 2 | 44 |
| अनृट्र | 2 | 30 |
| अनृत | 2 | 61 |
| अंमोकु(क)ह | 4 | 31 |
| अन्तक | 2 | 103 |
| ,, | ,, | 247 |
| ,, | 3 | 67 |
| अन्तर | 2 | 205 |
| अन्तरात्मन् | 2 | 28 |
| अन्तरिक्ष | 2 | 166 |
| अन्तःस्वरूप | 2 | 9 |
| अन्तावसायिन् | 4 | 11 |
| अन्तिक | 2 | 20 |
| ,, | ,, | 319 |
| अन्तु | 2 | 6 |
| अन्त्य | 2 | 5 |
| अन्त्यज | 2 | 303 |
| अन्त्यभव | 2 | 5 |
| अन्दू | 2 | 15 |
| अन्धकूप | 2 | 85 |
| अन्ध | 2 | 19 |
| अंध | 2 | 216 |
| ,, | 3 | 15 |
| अन्यत् | 2 | 28 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अन्यदेहचिकित्सार्ह | 3 | 286 |
| अन्वय | 2 | 97 |
| ,, | ,, | 146 |
| ,, | 3 | 2 |
| अन्वेषण | 2 | 223 |
| अप् | 1 | 14 |
| ,, | 2 | 339 |
| अपत्य | 3 | 165 |
| अपदेश | 2 | 37 |
| ,, | ,, | 176 |
| अपदेश | 4 | 11 |
| अपभ्रंश | 4 | 12 |
| अपवर्ग | 4 | 2 |
| अपवाद | 2 | 170 |
| ,, | 3 | 55 |
| अपवारण | 4 | 19 |
| अपशब्द | 4 | 12 |
| अपावृत | 4 | 9 |
| अपि | 2 | 18 |
| अपूरक | 2 | 354 |
| अप्रसूतस्त्री | 2 | 88 |
| ,, | ,, | 311 |
| अप्रिय | 3 | 3 |
| अबलारत्न(?) | 4 | 183 |
| अब्ज | 2 | 2 |
| अब्ज | 2 | 53 |
| ,, | ,, | 178 |
| ,, | 3 | 161 |
| ,, | ,, | 257 |
| ,, | 4 | 135 |
| अब्द् | 2 | 14 |
| अब्द | 2 | 77 |
| ,, | ,, | 225 |
| ,, | ,, | 293 |
| ,, | 3 | 209 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अब्धि | 2 | 9 |
| अब्धि | 2 | 71 |
| ,, | ,, | 153 |
| ,, | ,, | 169 |
| ,, | ,, | 236 |
| ,, | 3 | |
| ,, | 4 | |
| अब्धिफेन | 4 | |
| अभय | 3 | |
| अभया | 3 | |
| अभया | 4 | |
| अभाग्य | 2 | 231 |
| अभिक | 3 | 202 |
| अभिजात | 4 | 3 |
| अभिधेय | 2 | 12 |
| अभिनिष्ठान | 4 | 8 |
| अभिप्राय | 2 | 12 |
| ,, | ,, | 115 |
| ,, | ,, | 215 |
| ,, | 3 | 24 |
| अभिमान | 4 | 3 |
| अभिमुख | 3 | 2 |
| अभिलाष | 2 | 314 |
| अभिलाषा | 2 | 143 |
| अभिव्याप्ति | 1 | 6 |
| अभिशस्त | 4 | 119 |
| अभिषङ्ग | 4 | 4 |
| अभिषव | 2 | 302 |
| अभिष्यन्द | 4 | 18 |
| अभिष्वङ्ग | 2 | 251 |
| अभीत | 3 | 2 |
| अभीर | 2 | 105 |
| अभीषु | 3 | 10 |
| अभ्यर्णन | 3 | 231 |

| Word | Kāṇḍa | Stanza |
|---|---|---|
| अभ्यवहार | 2 | 212 |
| अभ्यस्त | 3 | 34 |
| अभ्र | 2 | 4 |
| अभ्रक | 2 | 4 |
| ,, | ,, | 324 |
| अमर | 3 | 13 |
| अमरद्रुम | 2 | 119 |
| अमा | 2 | 230 |
| अमात्य | 2 | 301 |
| अमृत | 1 | 38 |
| अमृत | 2 | 341 |
| ,, | ,, | 361 |
| ,, | 3 | 46 |
| ,, | 4 | 27 |
| अमृत | 3 | 14 |
| ,, | ,, | 15 |
| अमृता | 2 | 135 |
| ,, | ,, | 207 |
| ,, | 3 | 6 |
| अमृता | 3 | 15 |
| अमोघ | 3 | 4 |
| अमोघा | 3 | 5 |
| अम्बर | 2 | 168 |
| ,, | ,, | 187 |
| ,, | 3 | 270 |
| ,, | 4 | 162 |
| अम्बर | 3 | 18 |
| अम्बरवाक् | 1 | 18 |
| अम्बरीष | 4 | 16 |
| अम्बु | 2 | 34 |
| ,, | 3 | 57 |
| अम्बुद | 4 | 170 |
| अम्बुपर्णी | 2 | 354 |

